# Escape to the



Escape to the sleepy village of Modhera. To the glorious sun-temple where once a golden deity reflected the rays of the rising sun back to the heavens. To a world of splendid architecture and exquisite sculpture that defies the ravages of time ...

The lost glory of Modhera. Watch it come alive in the pages of the Heritage.

**The Heritage: magazine or mini library?**

The Heritage is an amazing storehouse of information: every issue is a unique compilation of facts that answer some of the most intriguing questions.

How were black ants used in ancient surgery?

Why do the Charans of Rajasthan worship rats?

What kind of spacecraft will NASA send up to visit Halley's Comet?

And more ...

Fascinating articles on every aspect of Indian culture. Stories about the land, its history, its people, their customs, their arts and crafts ...

Travelogues that capture the spirit of little-known places and exotic lands.

Updates – and flashbacks – on science and technology.

From the publishers of Chandamama

THE HERITAGE





It's worth preserving. Every issue of it.

कविहृदयम्-

# दृष्टिभेदात् दृश्यभेदः

**रामाय रामभद्राय रामचन्द्राय वेधसे।**
**रघुनाथाय नाथाय सीतायाः पतये नमः॥**

आपततः एषः श्लोकः अमरकोषस्य पर्यायपदानाम् आवली इव दृश्यते किल ? सूक्ष्मं विचार्यमाणे स्वारस्यं दृश्यते।

श्रीरामस्य आस्थानम्। सभायां सर्वविधजनाः अपि सन्ति। रामे सर्वेषां समाना प्रीतिः। समानः अभिमानः च। रामम् अभिनन्दितुं सर्वे मन्त्राक्षतान् हस्ते गृहीत्वा स्थिताः सन्ति। तदा-

* सरलहृदयः वैदिकः वदति- ''रामाय''।
* तत्रत्यः ज्येष्ठः चिन्तितवान्- रामाय इति कथनं सामान्यम् इति। अतः सः उक्तवान्- ''रामभद्राय''।
* वर्णनप्रियाः कवयः उक्तवन्तः- ''रामचन्द्राय''।
* वशिष्ठादयः परब्रह्मनिष्ठाः मुनयः उक्तवन्तः- ''वेधसे''।
* लक्ष्मण-भरत-शत्रुघ्नाः किं मौनं तिष्ठेयुः ? ते उक्तवन्तः- ''रघुनाथाय''।
* सीतादेवी अपि किमपि वदेत् एव किल ? सा साभिमानम् उक्तवती- ''नाथाय''।
* महिलागोष्ठी अपि तत्र आसीत् एव। गोष्ठीस्थाः महिलाः स्वाभिमानं प्रकटितवत्यः- ''सीतायाः पतये''।

एकः एव रामः विविधैः विविधदृष्ट्या दृष्टः। एवमेव देवविषये अपि। देवः एकः एव। दर्शकस्य दृष्टिभेदात् भिन्नतया दृश्यते सः।

-('जीवनधर्मयोग'पुस्तकतः)



# चन्दमामा

नवम्बर – १९८५

*

अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् रू. २-५०

वार्षिकं ग्राहकशुल्कम् रू. ३०-००

# चन्दमामा

## मासपत्रिका — ज्ञानाय तोषाय च !

* चन्दमामा- भारतीयानि अद्भुतचरित्राणि साहित्य-रत्नानि च सुचारूपेण उपस्थापयति ।
* सार्वलौकिकी दृष्टिः ! सरसाः कथाः, यासाम् आप्रपञ्चं व्याप्तिः ।
* विदग्धेन विनोदेन प्रतिभाविलासेन च एषा वाचकान् उल्लासयति ।
* एषा हि भाषावृद्धेः सरलं साधनम् ! ज्ञानवृद्धेः सुलभं सोपानम् !!

चन्दमामा न केवलं भवतः विचारसंवर्धिनी; भवतः प्रीतिपात्राणां विवेकवर्धिनी अपि । उपायनीक्रियतां मित्रबन्धुभ्यः ।

**किशोराणाम् एषा पत्रिका वाचकान् सर्वान् किशोरयति ।**

त्रयोदशभिः भाषाभिः प्रकाश्यते हि चन्दमामा । कयापि भाषया प्रकाश्यमानायाः ग्राहकाः भवन्तु ।

**आस्सामी, बङ्गाली, इंग्लीष्, गुजराती, हिन्दी, कन्नड, मलयाळम्, मराठी, ओरिया, पञ्जाबी, संस्कृतम् तमिळु, तेलुगु ।**

**वार्षिकं ग्राहकशुल्कं रू. ३०.००**

अभिलषितां भाषां संसूच्य ग्राहकशुल्कम् अद्यैव प्रेषयन्तु—

**डाल्टन् एजन्सीस्**

चन्दमामा बिल्डिङ्गस्,

वडपळनी, मद्रास्-६०० ०२६.

# जिज्ञासा

शिष्यः- आचार्य ! अभिवादये ।

आचार्यः- चिरं जीवतु वत्स ! आगच्छतु उपविशतु ।

शि- जिज्ञासुः अहम् भवतः समीपम् उपस्थितः अस्मि ।

आ- मम सकाशतः ज्ञातुम् इच्छति भवान् ? सन्तोषस्य एषः विषयः मम । यतः श्रोतारः खलु दुर्लभाः ? यत् ज्ञातुम् इच्छति तत् निस्सङ्कोचं प्रष्टुम् अर्हति भवान् । कुत्र संशयः ;भवतः ? तर्कशास्त्रे ? व्याकरणे ? . . ।

शि- शास्त्रविषयम् अत्र अहं प्रस्तोतुं न इच्छामि ।

आ- एवं तर्हि . . ?

शि- सामान्यभाषाज्ञानविषये व्यवहारविषये च प्रष्टव्यम् अस्ति मया ।

आ- तत्र प्रष्टव्यं वक्तव्यं वा किं स्यात् भोः !

शि- तथा न श्रीमन् ! भाषादृष्टया अहम् इदानीम् अपि बालः । व्यवहार-सन्दर्भे तदा तदा सन्देहाः उद्भवन्ति । कुत्रचित् अज्ञानं, कुत्रचित् अस्पष्टता . . ।

आ- अस्तु नाम, भवान् यत् इच्छति तत् पृच्छतु ! सरलया शैल्या सर्वस्य अपि विवरणं ददामि ।

शि- तथा कृतं चेत् नितराम् उपकृतः भवेयम् ।

आ- अस्तु तावत् । पाठने मम अपि विशेषाभिरुचिः । किन्तु अद्य मम समयावकाशः नास्ति किल ?

शि- चिन्ता नास्ति । अद्यैव ज्ञातव्यम् इति ममापि न तथा त्वरा । यदा सूच्यते तदा आगमिष्यामि ।

आ- एवं तर्हि श्वः आगच्छतु । शुभे मुहूर्ते पाठस्य आरम्भः भवतु ।

शि- उपकृतोऽस्मि भवतः अनुग्रहेण ।

आ- मम किम् अत्र ! देवः सर्वं कारयति ।

[मान्याः वाचकाः ! इतः परम् अत्र भाषाविषयकाः अवश्यं ज्ञातव्याः केचन सामान्याः विषयाः प्रस्तूयन्ते । शिष्यः-भवताम् आशयस्य जिज्ञासायाः च संवादी । गुरुः भवति-"चन्दमामा" । ]

# चन्दमामा

संस्थापकः 'चक्रपाणिः'　　　सञ्चालकः 'नागिरेड्डी'

प्रिय वाचकाः,

अस्मिन् मासे दीपावलीमहोत्सवः भविष्यति। विभिन्नरीत्या उत्सवस्य आचरणम्- एषः साम्प्रदायिकः विषयः। निरर्थकं केवलमनोरञ्जनार्थं वा उत्सवः तु न आचर्यते किल? तर्हि- दीपावलीमहोत्सवस्य तात्त्विकः अर्थः, कः? कं वा सन्देशं ददाति दीपावली?

दीपः उत्साहस्य त्यागस्य च सङ्केतः। सर्वत्र अन्धकारे व्याप्ते अपि स्वयम् अल्पाकारः चेदपि दीपः ज्वलन् अन्यान् प्रकाशयति। अन्धकारेण हताशस्य दूरस्थस्य आशाबिन्दुः एषः स्वनाशं स्वागतीकुर्वन् परोपकारं करोति। दीपस्य अन्यत् वैशिष्ट्यं यत् सः अन्यं दीपयति। एतेन अन्यदीपः दीप्तः भवति, सः अपि परिपूर्णः एव! जन्यजनकयोः मध्ये गुणेन हीनता अंशतः अपि नास्ति।

वयं संस्कृतज्ञाः अपि दीपाः इति भवेम। अस्मासु संस्कृतविषये यावती प्रीतिः अस्ति तावतीम् एव प्रीतिम् अन्यः अपि यथा प्रदर्शयेत् तथा कुर्मः। यत्ने कृते यदि न सिध्यति कोऽत्र दोषः?

सम्पुट-२　　　नवम्बर-८५　　　सञ्चिका-८

प्रतिकृतिमूल्यम्- रू.२-५०　वार्षिकं ग्राहकशुल्कम्- रू.३०/-



# रसप्रश्नाः

१. अमरकोषस्य कर्त्रा स्वग्रन्थस्य नाम किम् इति निर्दिष्टम् ?

(१. अमरकोषः २. नामलिङ्गानुशासनम् ३. नामार्थकोषः)

२. पाणिनिना विरचितस्य काव्यस्य नाम किम् ?

(१. जाम्बवतीविजयम् २. जाम्बवतीपरिणयः ३. जाम्बवतीयम्)

३. बृहत्कथा कया भाषया लिखिता ?

(१. संस्कृतेन २. पालिभाषया ३. पैशाचिकभाषया)

४. भीष्मस्य जन्मनाम किम् ?

(१. देवव्रतः २. देवप्रियः ३. प्रियव्रतः)

५. संस्कृतस्य कः ग्रन्थः अत्यधिकभाषासु अनूदिता अस्ति ?

(१. भगवद्गीता २. पञ्चतन्त्रम् ३. रामायणम्)

६. कः सुप्रसिद्धः गद्यग्रन्थः कथानायक्याः नाम्ना आहूयते ?

(१. कादम्बरी २. वासवदत्ता ३. हर्षचरितम्)

७. रामायणे कति श्लोकाः सन्ति ?

(१. लक्षश्लोकाः २. दशसहस्रश्लोकाः ३. चतुर्विंशतिसहस्रश्लोकाः)

८. 'मृच्छकटिक'- ग्रन्थस्य कर्ता कः ?

(१. शूद्रकः २. विशाखदत्तः ३. राजशेखरः)

९. हितोपदेशः केन रचितः ?

(१. नारायणभट्टेन २. विष्णुशर्मणा ३. भट्टनारायणेन)

१०. अद्वितीय-संस्कृत-दिनपत्रिकायाः नाम किम् ?

(१. शारदा २. भारती ३. सुधर्मा)

उत्तराणि - (१) २ (२) १ (३) ३ (४) १ (५) २ (६) १ (७) ३
(८) १ (९) २ (१०) ३

* * *

# रसवार्ताः



## विद्यार्थिनां पर्वतारोहणम्

मुम्बापुर्याः (बोम्बायी) इन्स्टिट्यूट् आफ् टेक्नालजी नामिकायाः विद्यासंस्थायाः षट् विद्यार्थिनः सद्यःकाले किन्नार-हिमालये स्थितस्य ६३४९ मीटर् उन्नतस्य पवरङ्ग्शिखरस्य आरोहणं यशस्वितया कृतवन्तः ।

## बालानां चलचित्रसंस्था



बेङ्गलूरुसमीपे १८ कोटि रूप्यकाणां व्ययेन एष्याखण्डे एव अतिविशालस्य चिल्ड्रन्स् फिल्म् काम्प्लेक्स् निर्माणम् उद्दिष्टम् अस्ति । चिल्ड्रन्स् फिल्म् सोसैटी आफ् इण्डिया संस्थायाः अध्यक्षः अमोल् पालेकरः एतं विषयं प्रस्तुत्य- "अत्र बालान् मनसि कृत्वा चित्राणि निर्मीयन्ते, बालाः अपि अत्र स्वयं चित्रनिर्मापकाः भविष्यन्ति" इति उक्तवान् ।

## अतिप्राचीना राक्षसगोधिका



अरिजोनामरुभूमौ २२५ मिलियवर्षेभ्यः पूर्वतनायाः डिनोजार् नामिकायाः राक्षसाकारायाः गोधिकायाः अस्थिपञ्जरं प्राप्तम् अस्ति । क्यालिफोर्निया विश्वविद्यालयीयः राबलाङ्ग् वदति यत् एतत् एव राक्षसगोधिकायाः अतिपुरातनम् अस्थिपञ्जरम् इति ।

# भवन्तः जानन्ति वा ?

१. भारते सर्वप्रथमं प्रकटिता वार्तापत्रिका का ?

२. अमेरिकादेशे रब्बर्- निर्माणार्थं प्रसिद्धं केन्द्रस्थलं किम् ?

३. श्रीलङ्कायां हिन्दुजनैः मुस्लिमजनैः बौद्धैः च पवित्रतमत्वेन भाव्यमानः पर्वतः कः ?

४. बुद्धस्य जन्म लुम्बिनीवने अभवत् । एवं तर्हि तस्य निर्वाणः कुत्र अभवत् ?

५. क्रि. पू. द्वितीयशताब्दौ एव योगशास्त्र-विषये कः सूत्राणि लिखितवान् ?

(उत्तराणि ६५ तमे पृष्ठे)

# अन्धकासुरः

अन्धकः नाम 'नेत्रहीनः' इत्यर्थः। किन्तु अन्धकासुरः न नेत्रहीनः। इच्छामात्रेण सः सहस्रं नेत्राणि प्राप्तुं शक्नोति स्म। एवमेव सङ्कल्पमात्रेण हस्तम् अपि सः प्राप्तुं समर्थः आसीत्। एषा शक्तिः तेन ब्रह्मणः अनुग्रहात् सम्पादिता आसीत्। 'अहङ्कारेण अन्धः इव आचरणं कृतवान्' इत्यतः अन्धकः इति तस्य नाम।

गर्वातिशयेन अन्धकः साधुजनान्, संन्यासिनः देवताः च पीडयति स्म। एतस्य पीडातः मुक्तिं प्राप्तुम् इच्छन्तः ऋषि-मुनि-देवादयः नारदस्य शरणं गतवन्तः। नारदः अन्धकस्य निवारणार्थम् योग्यम् उपायं चिन्तितवान्।

मन्दारपर्वते अलौकिकगन्धयुक्तानि मन्दारपुष्पाणि सन्ति। नारदः तेषां मन्दारपुष्पाणां मालां धृत्वा अन्धकभवनं गतवान्।

पुष्पाणां अलौकिकसुगन्धेन आकृष्टः अन्धकः- "एतानि पुष्पाणि कुत्र लभ्यन्ते?" इति पृष्टवान्।

"मन्दारपर्वते यथेष्टं सन्ति" इति उक्तवान् नारदः। अन्धकः तत्क्षणे एव मन्दारगिरिम् उद्दिश्य प्रस्थितः एव। मन्दारगिरिः शिवस्य अधीने अस्ति। शिवभक्तः वा विष्णुभक्तः वा मन्दार-गिरौ पादं स्थापयितुम् अर्हति, न अन्यः।

अन्धकः मदोन्मत्तः सन् एतं नियमम् अविगणय्य मन्दारपर्वतम् आरूढवान्। एतेन कुपितः शिवः त्रिशूलास्त्रस्य प्रयोगं कृतवान्। अपरक्षणे अन्धकासुरः उच्चैः आक्रोशनं कुर्वन् पर्वतमूले पतितवान। तत्रैव मृतः च।






## ११

[भेरुण्डपक्षिण: पुच्छेनिलीन: चन्द्रवर्मा अकस्मात् सरोवरे पतितवान्। तत्र स: मकरत: आत्मानं रक्षन् तीरं प्राप्तवान्। समीपस्थं वनं प्रविष्टवान् च। मध्यरात्रे मान्त्रिकपर्वतम् आरोढुम् उद्युक्त: चन्द्रवर्मा समीपे एव शिलानां मध्ये कापालिकां दृष्टवान्। आश्चर्यम् अनुभवन् स: तस्या: समीपं गतवान्। तदनन्तरम्...]

कापालिका महाशिलयो: मध्ये पतिता आसीत्। पतनसमये उत्पन्नया वेदनया सा कष्टम् अनुभवति स्म। तत्र कापालिकां दृष्ट्वा चन्द्रवर्मा आश्चर्यचकित:। पूर्वं यदा भेरुण्ड-पक्षिण: पुच्छे निलीनम् आसीत् तदा अग्नि-पक्षिणा उक्तं स्मृतवान् चन्द्रवर्मा। 'कथञ्चित् कापालिका भेरुण्डपक्षिण: वशे आगता। तेन पक्षिणा सा अत्र आनीता। आनयनसन्दर्भे केनापि कारणेन पतिता स्यात् च' इति चिन्तितवान् चन्द्रवर्मा।

'पतनेन कापालिकाया: शरीरं व्रणितं स्यात् वा?' इति आशङ्का अपि तस्य मनसि उत्पन्ना। 'सदाजागरूका कापालिका कथं भेरुण्डपक्षिण: वशे आगता?' इति न ज्ञातवान् स:।

"कापालिके! कथम् एवं जातम्? भवती विशेषतया व्रणिता तु न किल?" इति चन्द्रवर्मा अनुतापेन कातरतया च पृच्छन्




स्थितिः केनापि ज्ञाता न भवेत्। अतः तत्र वेणुसमूहस्य पृष्ठतः गच्छावः'' इति।

चन्द्रवर्मा जागरूकतया गच्छन् कापालिकां मन्दम् अग्रे नीतवान्। तौ शिलाः आरोहन्तौ अवरोहन्तौ च काञ्चित् गुहां प्राप्तवन्तौ।

गुहायाः द्वारं विशालं न आसीत्। परितः वेणुसमूहः व्याप्तः आसीत्। गुहायाः अन्तः तु वैशाल्यम् आसीत्। गुहायाः उपरि स्थितायाः शिलायाः मध्यतः मन्दः प्रकाशः आगच्छति स्म। रहस्यरूपेण स्थातुं योग्यं स्थलम् आसीत् तत्।

कापालिका गुहां प्रविश्य एकत्र कोणे उपविष्टवती। तदा चन्द्रवर्मा पृष्टवान्- ''कापालिके! भवती कथम् अत्र आनीता इति मया तर्कबलेन ज्ञातम्। भवत्याः आगमनं मान्त्रिकेण न ज्ञातं स्यात् किल?'' इति।

कापालिका मन्दं हसितवती। तस्याः मुखे भीतेः रेखा अपि न आसीत्।

''चन्द्रवर्मन्! पर्वतसमीपे मम उपस्थितिः यदि मान्त्रिकेण ज्ञाता स्यात् तर्हि सः माम् अमारयिष्यत् एव। अहं प्रातः एव भेरुण्ड-पक्षिणा अत्र आनीता। कालनागस्य आक्रमणेन भेरुण्डपक्षिणौ मृतौ। कालनागस्य साहाय्यं यदि न स्यात् तर्हि अहं एतावति काले निश्चयेन मृता अभविष्यम्'' इति उक्त-वती कापालिका।

तस्याः शरीरं प्रीत्या स्पृष्टवान्।

तदा कापालिका क्षीणस्वरेण उक्तवती- ''चन्द्रवर्मन्! उच्चैः सम्भाषणं न करोतु। अहं तु विशेषतया न व्रणिता। प्रथमम् आवां कुत्रापि प्रच्छन्नस्थलं गच्छावः। तत्र सर्वं विवरणपूर्वकं वदामि अहम्। प्राणापायस्य भीतिः तु नास्ति एव। भवान् किञ्चित् हस्त-साहाय्यं ददातु। अहम् उत्तिष्ठामि। सन्धिषु रक्तसञ्चारः स्थगितः अस्ति। किञ्चित् सञ्चरामि चेत् सर्वं सम्यक् भवति'' इति।

चन्द्रवर्मा हस्तसाहाय्येन ताम् उन्नीय तस्यै स्थातुं भुजसाहाय्यं दत्तवान्। चन्द्रवर्मणः भुजम् आधारीकृत्य कापालिका मन्दं पदं स्थापयन्ती उक्तवती- ''चन्द्रवर्मन्! आवयोः




"एवं वा ? इतःपरं चिन्ता मास्तु। इदानीम् एव गत्वा शङ्खमान्त्रिकस्य कथां समाप्य प्रत्यागमिष्यामि। अनन्तरम् उपविश्य सविस्तरं वार्तालापं कुर्वः" इति वदन् उत्थाय प्रस्थातुम् उद्युक्तः चन्द्रवर्मा।

कापालिका चन्द्रवर्मणः गमनं निषिध्य उक्तवती- "मित्र ! अग्निपक्षिणं स्मरतु। रात्रौ अग्निपक्षितः भयम् अस्ति एव। दिने तु मान्त्रिकतः भयम्। अग्निपक्षी निवारितः चेत् पुनः रात्रौ भयं नास्ति। एतद्विषये कालनागः प्रयत्नं कुर्वन् अस्ति। भवान् त्वरां न प्रदर्शयतु" इति।

"एवं तर्हि कालनागः कुत्र ? कस्यां दिशि गतः सः ?" इति कातरस्वरेण पृष्टवान् चन्द्रवर्मा।

तदा कापालिका मन्दहासं प्रकटयन्ती उक्तवती- "चन्द्रवर्मन् ! कालनागस्य विश्वासः आदरः च मयि यावत् अस्ति ततोऽपि अधिकं भवद्विषये अस्ति। भवतः अकस्मात् दर्शनेन मम आश्चर्यं किमपि न जातम्। भवान् एतावच्छीघ्रम् कथम् अत्र आगतवान् इत्यपि मया ज्ञातम्। कालनागेन सर्वम् उक्तम् अस्ति। भवान् अरण्ये विचित्रफलं यदा खादितवान् तदा एव अहं ज्ञातवती- 'भवान् सकुशलं अत्र प्राप्स्यति' इति। कालनागस्य साहाय्यम् अस्ति चेत् किं वा असाध्यम् ?" इति।

कापालिकायाः वचनं यावत् न समाप्तं तावता उज्ज्वलः प्रकाशः सर्वत्र प्रसृतः। आश्चर्यचकितः चन्द्रवर्मा गुहाद्वारसमीपम् आगतवान्। बहिः दृष्टिं प्रसारितवान् च। समीपे वेणुसमूहस्य पृष्ठतः तेन अग्निपक्षी दृष्टः। कालनागः दंष्ट्रां प्रदर्शयन् अग्निपक्षिणः उपरि आक्रमणं कुर्वन् आसीत्। एतत् दृष्टवतः चन्द्रवर्मणः शरीरे रोमाञ्चः उत्पन्नः।

"अये ! कापालिके ! अग्निपक्षिणः उपरि कालनागः आक्रमणं कृतवान् अस्ति। अहं गत्वा कालनागस्य साहाय्यं करोमि। भेरुण्ड-पक्षिणोः मारणेन सः श्रान्तः अपि स्यात्। मम सामर्थ्यप्रदर्शनस्य अपि एषः योग्यः



अत्रान्तरे अग्निपक्षि-कालनागयोः मध्ये घोरं युद्धं प्रचलत् आसीत्। कालनागः मुखं विशालम् उद्घाट्य अग्निपक्षिणः ग्रहणे प्रयतमानः आसीत्। अग्निपक्षी तु तीक्ष्णया चञ्च्वा पादाङ्गुलीभिः च प्रत्याक्रमणं करोति स्म। अग्निपक्षिणः मुखतः निर्गच्छता प्रखरेण अग्निना कालनागस्य शरीरं दह्यमानम् आसीत्। कालनागस्य मुखतः आगच्छतः विषवायुना अग्निपक्षी श्वासोच्छ्वासार्थं क्लेशम् अनुभवन् आसीत्। उभौ अपि पुनरपि प्रयत्नेन प्रत्याक्रमणं कुरुतः। उभयोः सामर्थ्यं समानं दृश्यते स्म।

सन्दर्भः'' इति उक्तवान् चन्द्रवर्मा।

''मास्तु भोः! गमनं मास्तु'' इति उच्चैः वदन्ती कापालिका गुहाद्वारस्य समीपम् आगतवती। ''मान्त्रिकस्य भृत्यम् अग्निपक्षिणं कालनागः मारयति इति मम दृढः विश्वासः अस्ति। भेरुण्डपक्षिणा अहम् आनीता इति प्रायः अग्निपक्षिणा ज्ञातं स्यात्। भेरुण्डपक्षिणोः मरणम् अपि तेन ज्ञातं स्यात् एव। यावत् सः शङ्खमान्त्रिकम् एतां वार्तां न निवेदयति ततः पूर्वम् एव तस्य मारणं भवेत्। अन्यथा आवयोः अपायः अस्ति एव। भवान् तत्र न गच्छतु। भवतः कोऽपि अपायः यदि भवेत् तर्हि मम का गतिः ?'' इति पृष्टवती कापालिका।

''अत्रत्यं युद्धम् इदानीम् शङ्खमान्त्रिकः ज्ञातवान् चेत् आवां तस्य बन्धने पतितौ इत्येव किल ?'' इति पृष्टवान् चन्द्रवर्मा।

''तथा किमपि न भवति। यतः अग्निपक्षिणः विषये शङ्खमान्त्रिकस्य महान् विश्वासः। यावत् अग्निपक्षी जागरूकतया तिष्ठति तावत् अपायः नास्ति इति चिन्तयित्वा मान्त्रिकः निश्चिन्ततया निद्रां करोति। पुनः उषःकाले एव तस्य जागरणम्। प्रतिदिनं प्रतिक्षणं सः किं करोति इति अहं सर्वं जानामि। रात्रौ कदापि सः जागरूकः न भवति'' इति उक्तवती कापालिका।

एतावता अग्निपक्षिणः अस्पष्टः चीत्कारः श्रुतः। कालनागः दंष्ट्राभ्यां तस्य कण्ठं

गृहीतवान् आसीत्। क्रमशः कालनागः स्वग्रहणंदृढीकृतवान्। अग्निपक्षिणः श्वासोच्छ्वासः स्थगितः। क्षणद्वये तदीयं मुखं परिवलितम्। अग्निपक्षी गतप्राणः जातः। अग्निपक्षिणः मरणं निश्चित्य कालनागः स्वबन्धनं शिथिलीकृतवान्।

आनन्दातिरेकेण 'जयतु कालनागः' इति वक्तुम् उद्युक्तः चन्द्रवर्मा परिसरं स्मरन् आनन्दोद्वेगं प्रयत्नेन निगृहीतवान्। बहिः उत्प्लुत्य एकश्वासेन कालनागसमीपं गतवान् च। कापालिका अपि वेदनां विस्मृत्य उत्साहेन चन्द्रवर्माणम् अनुसृतवती।

कालनागः अत्यायासेन निश्चलं पतितः आसीत्। श्वासोच्छ्वासेन सः जीवितः इति ज्ञातुं शक्यते स्म, तावदेव। उभयोः आगमनं ज्ञात्वा कालनागः कष्टेन शिरः उन्नीय गौरवं सूचितवान्।

चन्द्रवर्मा प्रीत्या कालनागस्य शरीरम् आमृष्टवान्। अग्निपक्षिणः मुखतः निःसृतेन अग्निना कालनागस्य शरीरं तत्र तत्र दग्धम् आसीत्। शरीरं भीकरं दृश्यते स्म। स्वसेवकस्य दुःस्थितिं दृष्ट्वा खेदम् अनुभवन्ती कापालिका तस्य पार्श्वे उपविश्य उक्तवती "कालनाग! भवतः कष्टं सद्यः एव समाप्तं भविष्यति। अग्निपक्षिणः मरणेन मान्त्रिकस्य अर्धं बलं नष्टम्। अतः अर्धं कार्यं सिद्धम् इव। इतः परं शङ्खमान्त्रिकस्य गृहे स्थितः अपूर्वशक्तिशाली शङ्खः अस्मद्वशे आगतः चेत्





"शङ्खमान्त्रिकः प्रतिदिनं सूर्योदयसमये पूर्वदिशि पर्वतप्रान्ते स्थितां शिलाम् आरुह्य परिक्रमणं कुर्वन् मन्त्रोच्चारणं करोति। सा च शिला न तथा विशाला, न तथा उन्नता च। तत्र स्थितः किञ्चित् अजागरूकः भवति चेदपि तस्य प्रपाते पतनं निश्चितम्। मया यथा सूच्यते तथा भवान् करोति चेत् मान्त्रिकः प्रपाते पतितः भवेत्। प्रपाते शिलानाम् उपरि पतितस्य तस्य मरणं तु निश्चितम् एव। किन्तु कदापि तस्य दृष्टिपथे न आगन्तव्यम्। यतः तस्य दृष्टौ अपि मन्त्रशक्तिः अस्ति" इति उक्तवती कापालिका।

"तं प्रपाते पातयितुं कः उपायः ?" इति चन्द्रवर्मा कुतूहलेन उत्साहेन च पृष्टवान्।

"वदामि। समीपम् आगच्छतु" इति उक्तवती कापालिका। चन्द्रवर्मा यदा समीपं गतवान् तदा सा तस्य कर्णे निवेद्य उक्तवती- "एतत्सर्वं रहस्यरूपेण जागरूकतया च करणीयम्। अन्यथा अजागरूकतया अपि सर्वनाशः सम्भवेत्" इति।

चन्द्रवर्मा क्षणकालं चिन्तयन् आसीत्। अनन्तरम् उत्साहेन पार्श्वस्थम् एकं वृक्षम् आरुह्य पूर्वदिशि दृष्टिं प्रसारितवान्। वृक्षात् अवतीर्य उक्तवान् च- "कापालिके! सूर्योदयः सद्यः एव भवति। ततः पूर्वम् अहं

भवान् मानवत्वं प्राप्स्यति। अनन्तरं भवान् स्वतन्त्रः भविष्यति" इति।

मन्त्रगृहशब्दस्य श्रवणेन चन्द्रवर्मा एकक्षणं स्तब्धः। सः पूर्वदिशि दृष्टिं प्रसारयन् उक्तवान्- "कापालिके! सद्यः एव सूर्योदयः भविष्यति। ततः पूर्वम् अहं मान्त्रिकस्य पूजागृहं प्रविश्य शङ्खम् आनेतुं प्रयत्नं करोमि" इति।

कापालिका अपि पूर्वदिशं दृष्ट्वा उक्तवती- "इदानीं मान्त्रिकस्य पूजागृहे भवतः प्रवेशः न क्षेमकरः। मान्त्रिकस्य नाशार्थं मया अन्यः एव उपायः चिन्तितः अस्ति" इति।

"कः सः उपायः? इति" पृष्टवान् चन्द्रवर्मा।

मम कार्यं कृत्वा आगच्छामि। भवती कालनागेन सह गत्वा गुहायां विश्रान्तिं स्वीकरोतु" इति। अनन्तरं सः खड्गं हस्ते गृहीत्वा ततः वेगेन गतवान् च।

अरण्यमध्यं गत्वा सः खड्गसाहाय्येन लताः कर्तयित्वा राशीकृतवान्। पर्याप्तमात्रेण लताः कर्तयित्वा ताः परस्परं योजितवान्। अल्पे एव काले सुदीर्घा सुदृढा च रज्जुः निर्मिता अभवत्। एवं सिद्धायाः रज्ज्वाः एकम् अन्तं गृहीत्वा चन्द्रवर्मा वेगेन पर्वतम् आरूढवान्। पूर्वदिशि स्थितां तां शिलां तया रज्ज्वा बद्धवान्। रज्जुबन्धनं सुदृढम् अस्ति वा न वा इति द्विवारं परीक्ष्य, तृप्तिं प्राप्य वेगेन अधः आगतवान् च।



गुहायाः समीपम् आगत्य यावत् सः कापालिकाम् आह्वातुम् उद्युक्तः तावता कापालिका एव बहिः आगतवती। "चन्द्रवर्मन्! मया यथा सूचितं तथा कृत्वा आगतवान् किल!" इति पृष्टवती च।

"कार्यं तु सम्यक् एव कृतम्। फलं कथं भवेत् इति तु द्रष्टव्यम्। रज्जोः एकेन अन्तेन शिला बद्धा अस्ति। ग्रन्थिम् आकृष्य द्विवारं परीक्षितवान् अस्मि। अन्यः अन्तः अधोभागे अस्ति। किन्तु मम एकः संशयः- शिला पूर्वदिशि नोदनीया किल? तदा एव सा अधः पतेत्। पश्चिमदिशि आकर्षणेन अधः पतेत् वा?" इति पृष्टवान् चन्द्रवर्मा।

कापालिका मन्दहासं प्रकटयन्ती- "भवान् रज्जोः अन्तः कुत्र अस्ति इति प्रथमं प्रदर्शयतु। आवां तत्रैव स्थित्वा प्रतीक्षां कुर्वः। तत्रैव शिला कथं पतेत् इति प्रत्यक्षं प्रदर्शयामि" इति उक्तवती।

चन्द्रवर्मा कापालिकां रज्जोः अन्तसमीपं नीतवान्। रज्जुं स्पृष्ट्वा तृप्तिं प्रकटयन्ती "भवतः संशयः निराधारः। शिला किञ्चित् चलिता भवति चेदपि तदुपरि स्थितः प्रपाते पतति एव" इति कापालिका चन्द्रवर्माणम् उक्तवती।

अत्रान्तरे सा विशालाभ्यां नेत्राभ्यां पश्यन्ती अङ्गुलिप्रदर्शनपूर्वकं चन्द्रवर्माणं मन्दस्वरेण

सूचितवती- "तत्र पश्यतु- शङ्खमान्त्रिकः! तस्य हस्ते स्थितः दण्डः कान्त्या प्रकाशते खलु? सः यदा शिलाम् आरुह्य तिष्ठति तदा भवता बलेन रज्जुः आक्रष्टव्या" इति।

चन्द्रवर्मा पर्वतशिखरं दृष्टवान्। पूर्वाकाशः रक्तच्छायया व्याप्तः आसीत्। अस्मिन् मन्द-प्रकाशे मान्त्रिकस्य विकृतः आकारः अग्रे गच्छति स्म।

'महामान्त्रिकां कापालिकाम् अपि भीषयतः एतस्य मान्त्रिकस्य शक्तिः कियती स्यात्' इति मनसि एव उद्गारं प्रकटितवान् चन्द्रवर्मा। अग्रे गत्वा रज्जोः अन्तं हस्ते गृहीत्वा एकपादं भूमौ दृढं संस्थाप्य अपरपादं किञ्चिद् उन्नतायाः शिलायाः उपरि स्थापयित्वा सः आकर्षणार्थं सिद्धः अभवत्।

अत्रान्तरे शङ्खमान्त्रिकः पर्वतप्रान्तम् आगत्य शिलाम् आरुह्य मन्त्रदन्डं सूर्यस्य दिशि प्रसारितवान्। "चन्द्रवर्मन्! एषः एव उचितः समयः। विनाविलम्बं रज्जुं वेगेन आकृष्य भवान् धावन् अत्र आगच्छतु" इति सूचितवती कापालिका।

चन्द्रवर्मा रज्जुं हस्तद्वयेन गृहीत्वा वेगेन आकृष्य त्यक्तवान्। अपरक्षणे एव शङ्ख-मान्त्रिकः हस्तद्वयम् उन्नीय पादद्वयं निराधारे आकाशे चालयन् "हन्त! महती वञ्चना! द्रोहः" इति उच्चैः आक्रोशनं कृतवान्। तेन मान्त्रिकेण क्षिप्तः मन्त्रदण्डः मनोवेगेन गच्छन् मन्त्रगृहेण घट्टितः अभवत्। तेन स्फोटितं तत् गृहम् आकाशे उद्गतं, शतधा छिद्रीभूय पार्श्वस्थे सरोवरे पतितं च। एतेन उद्गतं सरोवरस्य जलं चतसृषु दिक्षु वृष्टिरूपेण व्याप्नोत्। भयङ्करशब्देन पक्षिणः पशवः च स्वनिवासात् धावितवन्तः। तेषाम् आर्तनादेन सर्वाः दिशः व्याप्ताः।

अत्रान्तरे प्रपाते पतितः मान्त्रिकः प्रपात-तले स्थिताभिः तीक्ष्णशिलाभिः घट्टितः अभवत्। तत्रैव सः गतप्राणः जातः च।

(अनुवर्तते)






# स्वस्वरूपज्ञानम्

'आरब्धम् उत्तमजनाः न परित्यजन्ति' इत्यस्य उदाहरणम् इव स्थितः त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। शवं स्कन्धस्य उपरि आरोप्य मौनं श्मशानाभिमुखं प्रस्थितः च। तदा शवान्तर्गतः वेतालः उक्तवान्–"अये, महाराज ! अस्मिन् मध्यरात्रे भवान् श्रद्धया यत् कार्यं कुर्वन् अस्ति तत् किं परोपकारार्थम् ? मम तु तत्र सन्देहः अस्ति एव। यतः मानवस्य स्वभावः विचित्रः जटिलः च। अन्यस्य स्वभावं ज्ञातुं सामान्यतः कोऽपि प्रयत्नं न करोति। अन्यस्य किम्, आत्मनः स्वभावं ज्ञातुम् अपि बहवः प्रयत्नं न कुर्वन्ति एवं स्थिते अपि ते सर्वज्ञाः इव व्यवहरन्ति। एवम् अस्ति जगन्नाटकम्। श्रीपालः अपि एतादृशः एव कश्चित्। स्वस्वरूपज्ञानेन तस्य मोहभङ्गः कथं जातः इति विषये तदीयां कथां श्रावयामि। तेन भवतः मार्गायासः

# वेतालकथा



सार्वजनिकतया एतस्य सिंहासनस्य दर्शनार्थं राजा दुर्गस्य अन्तः विशेषव्यवस्थां कृतवान् आसीत्। प्रतिदिनम् एतस्य अपूर्वसिंहासनस्य दर्शनार्थं सहस्रशः जनाः राजधानीम् आगच्छन्तः आसन्।

'तत् सिंहासनं द्रष्टव्यम्' इति शीतलस्य मनसि अपि भावना उत्पन्ना। अतः अन्य-कार्याणि परित्यज्य शीतलः तद्दिने एव राजधानीं प्रति प्रस्थितः एव।

अत्रान्तरे सिंहासनविषये अन्याः वार्ताः प्रसृताः आसन्- "यः सिंहासनं निर्निमेषं पश्यति सः अस्पष्टरूपेण शक्तिरूपमान्त्रिकस्य दर्शनं प्राप्नोति। त्रिवारं सिंहासनं प्रदक्षिणी-कृत्य 'हे शक्तिरूप! अहं भवतः महत्त्वस्य परिचयार्थं सिंहासनस्य आरोहणं करोमि, न तु अधिकारलालसया' इति यः प्रार्थयति सः सिंहासने उपवेष्टुम् अपि अर्हति" इति।

शीतलस्य बन्धुः श्रीपालः राजधान्यां पौराणिकवृत्तिं कुर्वन् आसीत्। प्रतिदिनं सः महाराजं पुराणकथाः शास्त्रतत्त्वानि च श्रावयति। राजधानीम् आगतः शीतलः साक्षात् श्रीपालस्य गृहं गतवान्। कुशलवार्ता-लापानन्तरं शीतलः श्रीपालाय आगमनकारणं निवेदितवान्।

तदा श्रीपालः उक्तवान्- "शीतल! भवान् सिंहासनदर्शनार्थम् एव आगतः चेत्

परिहृतः भवेत्" इति।

अनन्तरं वेतालेन कथा आरब्धा-

"रामपुरे शीतलः नाम कश्चन कृषिकः आसीत्। सः दृढव्रती। मनसि यत् प्रविशति तत् सः साधयति एव।

कदाचित् ग्रामे वार्ता प्रसृता यत्-राजधान्यां नूतनगृहार्थं भूखननसन्दर्भे भूमेः अन्तः एकं विशालं सिंहासनं प्राप्तम् इति। "यः तस्य सिंहासनस्य उपरि उपविशति सः असदृशीं मन्त्रशक्तिं प्राप्नोति" इत्यपि वार्ता प्रसृता।

एतत् सिंहासनं शक्तिरूपनामकस्य मान्त्रिकस्य आसीत्। शतशः वर्षेभ्यः पूर्वं सः समग्रे जगति कल्लोलम् उत्पादितवान् आसीत्।



भवतः प्रयत्नः व्यर्थः एव। यतः इदानीं मान्त्रिकस्य सिंहासनं द्रष्टुं सर्वेषाम् अनुमतिः नास्ति। पूर्वं सिंहासनदर्शनार्थं गताः केचन अनुचितव्यवहारं कृतवन्तः। अतः इदानीं सिंहासनदर्शनार्थं महाराजस्य विशेषानुमतिः प्राप्तव्या'' इति।

''तर्हि भवान् विशेषानुमतिं दापयतु। बहुकालतः भवान् अत्र एव अस्ति किल'' इति उक्तवान् शीतलः।

तदा मन्दहासपूर्वकं श्रीपालः उक्तवान्- ''मित्र! विशेषानुमतेः प्राप्त्यर्थं प्रभावशालित्वम् अपेक्षितम्। अहं तु केवलं पुराणपठनेन जीवनं यापयन् अस्मि। राजास्थाने मम विशेषप्रभावः नास्ति'' इति।

शीतलः श्रीपालस्य वचनं श्रुत्वा मौनं स्थितवान्। अनन्तरदिने समग्रे नगरे सञ्चारं कृत्वा सः सिंहासनदर्शनविषये सर्वत्र विचारितवान्। यान् सः पृष्टवान् ते 'शीतलः श्रीपालस्य गृहे निवसति' इति यदा ज्ञातवन्तः तदा उक्तवन्तः- ''एवं चेत् सिंहासनदर्शने किं कष्टम्? श्रीपालस्य प्रभावः राजास्थाने यथेष्टम् अस्ति। सिंहासनदर्शनार्थं एषः च प्रभावः पर्याप्तः'' इति।

तद्दिने रात्रौ शीतलः श्रीपालं पृष्टवान्- ''सर्वे वदन्ति यत् राजास्थाने भवतः प्रभावः पर्याप्तमात्रेण अस्ति इति। एवं स्थिते अपि लघुसाहाय्यं भवान् किमर्थं न करोति?'' इति।

''एतत् तु जनानां भ्रमः। राजास्थाने मम वचनं किमपि न प्रचलति। एतद्विषये भवान् माम् अधिकं न पीडयतु'' इति श्रीपालः स्पष्टम् उक्तवान्।

'श्रीपालद्वारा कार्यं न सिध्यति एव' इति शीतलः ज्ञातवान्। तथापि सः स्वप्रयत्नं न त्यक्तवान्। दुर्गे यस्मिन् प्रकोष्ठे सिंहासनं स्थापितम् आसीत् तत्र नियुक्तेषु रक्षकेषु वीरभद्रः अन्यतमः आसीत्। शीतलः कथञ्चित् तस्य स्नेहं सम्पादितवान्। वीरभद्रः शीतलम् उक्तवान्- ''श्वः भवान् दुर्गस्य अन्तः आगच्छतु। केनापि उपायेन सिंहासनं प्रदर्शयामि'' इति।



तद्दिने रात्रौ शीतलः गर्वेण श्रीपालम् उक्तवान्- "श्रीपाल! अहं मम कार्यं साधितवान् एव। श्वः भवान् मां दुर्गस्य अन्तः नयतु, तावत् पर्याप्तम्" इति।

शीतलस्य वचनं श्रुतवतः श्रीपालस्य मनसि खेदभावः उत्पन्नः। "शीतलः यदि ग्रामं गत्वा- 'सिंहासनदर्शनार्थं श्रीपालः साहाय्यं न कृतवन्। अहम् अन्यस्य साहाय्येन सिंहासनं दृष्ट्वा आगतवान्' इति वदेत् तर्हि मम गौरवम् अपगच्छेत्" इति चिन्तितवान् श्रीपालः।

अनन्तरदिने सः महाराजसमीपं गत्वा विनयपूर्वकं उक्तवान्- "महाराज! भवान् मान्त्रिकसिंहासनस्य रक्षणार्थं यां व्यवस्थां कृतवान् सा व्यवस्था अपर्याप्ता। केचन रक्षकाः स्वपरिचितान् तदा तदा नीत्वा सिंहासनं प्रदर्शयन्तः सन्ति" इति।

महाराजः तत्क्षणे एव कञ्चित् विशेषसेवकम् आज्ञापितवान्- "भवान् मन्त्रिणं मम आदेशं वदतु यत् एतत्क्षणतः रक्षकभटाः अपि सिंहासनसमीपं गन्तुं न अर्हन्ति। परिचितं नेतुम् अपि न अर्हन्ति" इति।

सन्तुष्टः श्रीपालः गृहं प्रत्यागतवान्। तद्दिने रात्रौ श्रीपालः शीतलं दुर्गस्य अन्तः नीतवान्। शीतलः पूर्वपरिचितस्य वीरभद्रस्य समीपं गतवान्। तदा वीरभद्रः असहायकतां प्रदर्शयन् उक्तवान्- "मित्र! मां क्षाम्यतु भवान्। अद्य आरभ्य दुर्गरक्षणकार्ये ये नियुक्ताः सन्ति ते अपि सिंहासनस्य समीपं गन्तुं न अर्हन्ति। अतः भवते सिंहासनं प्रदर्शयितुं न शक्नोमि। अहम् असहायः" इति।

निराशः शीतलः पृष्टवान्- "मित्र! वीरभद्र! अन्यः उपायः कोऽपि नास्ति वा?" इति।

वीरभद्रः उक्तवान्- "एतस्मिन् प्रकरणे मन्त्रिणः दर्शनेन किमपि प्रयोजनं सिध्येत्" इति।

अनन्तरदिने प्रातःकाले एव शीतलः मन्त्रिणः प्रसादं गतवान्। प्रासादतः निर्गच्छतः सर्वान् साष्टाङ्गं नमस्कृतवान्। शीतलस्य एतेन

विचित्रव्यवहारेण मन्त्रिणः आश्चर्यं जातम्। सः शीतलम् अन्तः आहूय साष्टाङ्गनमस्कारस्य कारणं पृष्टवान्।

"महानुभाव! मान्त्रिकसिंहासनं द्रष्टुम् एव अहं सुदूरात् रामपुरग्रामतः अत्र आगतवान्। भवन्तं विना अन्यः कोऽपि सिंहासनदर्शनार्थं साहाय्यं कर्तुं न शक्नोति इति अहं ज्ञातवान्। भवन्तं तोषयितुम् योग्यं किमपि मम समीपे नास्ति। भवतः परिवारजनानां विषये श्रद्धां प्रदर्शयामि चेत् उचितं भवेत् इति अहं चिन्तितवान्। अतः भवतः गृहम् आगच्छतः सर्वान् नमस्कृतवान्" इति शीतलः विनयेन उक्तवान्।

शीतलस्य व्यवहारेण मन्त्री सन्तुष्टः। सः शीतलस्य आवासदिव्यवस्थाविषये पृष्टवान्। यदा तेन ज्ञातं यत् शीतलः श्रीपालस्य गृहे एव निवसति इति। तदा सः आश्चर्येण उक्तवान्- "एवं चेत् भवतः इच्छापूरणे कोऽपि क्लेशः न भवेत् एव। श्रीपालः दुर्गस्य अन्तः सर्वत्र गच्छति। तस्य सर्वत्र स्वातन्त्र्यम्। तेन सह भवान् अपि गच्छतु नाम। विनायासं भवतः कार्यं सिध्यति" इति।

मन्त्रिणः वचनं श्रुत्वा असमाधानं प्रकटयन् शीतलः उक्तवान्- "महानुभाव! सर्वे अपि एवम् एव वदन्ति। किन्तु श्रीपालः एतत् न अङ्गीकरोति। यदि भवान् सिंहासनदर्शनार्थं



तत् प्रकोष्ठं गन्तुं विशेषानुमतिं ददाति तर्हि अहम् उपकृतः भवामि। मम इच्छायाः पूर्तौ पुनः कोऽपि क्लेशः न उद्भवति" इति।

मन्त्री एतत् अङ्गीकृतवान्। शीतलः गृहम् आगत्य उत्साहेन श्रीपालाय प्रवृत्तं सर्वं निवेद्य उक्तवान्- "यदि कोऽपि विचारः मम मनसि आगच्छति तर्हि अहं तत् साधयामि एव। यं कमपि उपायम् आश्रित्य अहं कार्यं करोमि" इति।

'शीतलः यदि अन्यस्य प्रभावेण सिंहासनं द्रष्टुं शक्तः भवति तर्हि मम गौरवं न्यूनीभविष्यति' इति चिन्तितवान् श्रीपालः। अतः सः अनन्तरदिने मन्त्रिणं दृष्ट्वा उक्तवान्- "महानुभाव! मम परिचिताय शीतलाय भवान्



उक्तवान् इति तु अहं न जानामि। किन्तु भवतः सिंहासनदर्शनार्थम् अनुमतिः न लब्धा'' इति।

श्रीपालस्य वचनेन शीतलः आश्चर्यचकितः। सः तत्क्षणे एव मन्त्रिणः प्रासादं गतवान्। शीतलं दृष्ट्वा मन्त्री- ''पश्यतु ! भवान् श्रीपालस्य बन्धुः। भवान् तदीयाम् इच्छां विरुध्य सिंहासनं द्रष्टुं न शक्नोति। किन्तु श्रीपालः किमर्थं वा भवते सिंहासनं न प्रदर्शयति इति अहं न जानामि'' इति वदन् श्रीपालेन सह प्रवृत्तं वार्तालापं निवेदितवान्।

मान्त्रिकं सिंहासनस्य दर्शनार्थम् अनुमतिं दत्तवान् इति श्रुतवान्। एतत् सन्तोषस्य विषयः एव। किन्तु सिंहासनदर्शनार्थं गतेन तेन किमपि अनुचितम् आचरितं चेत् तत्र मम दायित्वं किमपि नास्ति'' इति।

श्रीपालस्य वचनेन मन्त्री निश्चितवान् यत् शीतलः न विश्वासार्हः। एवं यदि न स्यात् तर्हि किमर्थं वा श्रीपालः शीतलाय सिंहासनं न प्रादर्शयिष्यत्? एवं सर्वं विचिन्त्य मन्त्री उक्तवान्- ''भवान् एव स्वबन्धुविषये निर्लिप्तः। तर्हि अहं किमर्थं वा तद्विषये मध्ये प्रविशामि? किमर्थं वा अहं वृथा क्लेशे पतेयम्?'' इति।

गृहम् आगतः श्रीपालः शीतलम् उक्तवान्- ''शीतल! मन्त्रिमहोदयः पूर्वं किम्

शीतलः श्रीपालस्य गृहम् आगत्य उक्तवान्- ''अहम् एतत्क्षणे एव ग्रामं प्रतिगच्छामि'' इति।

''भवान् निराशः न भवतु। केवलम् आत्यासक्त्या किमपि कार्यं न सिध्यति इति अहं पूर्वम् एव निवेदितवान्। मन्त्रिणः दर्शनेन कार्यं न सिध्यति इति मया पूर्वम् उक्तम् एव'' इति उक्तवान् श्रीपालः।

''यदि भवान् इच्छति तर्हि शक्यम् अभविष्यत्'' इति शीतलः खेदेन उक्तवान्।

''मम तु तावान् प्रभावः नास्ति इति पूर्वम् उक्तम् एव किल?'' इति निरासक्त्या उक्तवान् श्रीपालः।

''वस्तुतः भवतः प्रभावः एव यदि न स्यात् तर्हि सिंहासनदर्शनम् अभविष्यत् एव।

किन्तु भवतः प्रभावः यथेष्टम् अस्ति। तेन एव मम इच्छा न सिद्धा" इति आवेशेन उक्तवान् शीतलः।

एतेन उत्तरेण श्रीपालः स्तब्धः। अनन्तर-दिने एव सः शीतलं सिंहासनसमीपं नीतवान्। शीतलः सिंहासनं दृष्ट्वा सन्तोषेण स्वग्रामं प्रतिगतवान्।

वेतालः एवं कथां समाप्य अवदत्- "राजन्! श्रीपालस्य व्यवहारविषये भवतः अभिप्रायः कः? पूर्वं तु सः शीतलाय मान्त्रिकसिंहासनं प्रदर्शयितुं निराकृतवान्। बहून् विघ्नान् उत्पादितवान् अपि। एतादृशः शीतलस्य आवेशपूर्णानि वचनानि श्रुत्वा कथं वा परिवृत्तः? एतस्य सन्देहस्य उत्तरं जानन् अपि यदि न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा त्रिविक्रमः उक्तवान्- 'श्रीपालसदृशाः विचित्राः अस्मिन् लोके विरलाः। एते केवलं स्वजीवनस्य सौख्यं चिन्तयन्ति। अन्येषां व्यवहारे प्रवेशः अनुचितः इत्यपि ते चिन्त-यन्ति।

शीतलः यदा सिंहासनदर्शनार्थं श्रीपालस्य साहाय्यं प्रार्थितवान् तदा श्रीपालः चिन्तित-वान्- 'अन्यव्यवहारेषु अहं किमर्थं प्रविशामि?' इति। अन्यच्च स्वप्रभावस्य पूर्णपरिचयः श्रीपालस्य न आसीत् अपि। शीतलस्य कोपावेशपूर्णवचनेन श्रीपालः स्वप्रभावस्य महत्त्वं ज्ञातवान्। 'विनाकारणं मदीयप्रभावेण अहम् अन्यस्य कार्ये विघ्नम् उत्पादयन् अस्मि' इति सः वस्तुस्थितिं ज्ञातवान्। श्रीपालः स्वभावेन सज्जनः एव। अतः सः आत्मनः दोषम् अङ्गीकृत्य शीतलाय साहाय्यं कृतवान्। पूर्वं किमर्थम् एतादृशी बुद्धिः न उत्पन्ना इति चेत् उत्तरं- 'कालः एव कारणम्' इत्येव" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।



# चित्तशुद्धिः

विशाखदत्तः नाम महाराजः कदाचित् अस्वस्थः जातः। वैद्यानां योग्यचिकित्सया मासाभ्यन्तरे सः किञ्चिदिव स्वस्थः जातः अपि।

एवं स्थिते कदाचित् केचन नगरप्रमुखाः महाराजस्य दर्शनार्थम् आगतवन्तः। महाराजस्य रोगशमनार्थं मन्दिरे कृतायाः पूजायाः प्रसादं महाराजस्य पुरतः संस्थाप्य ते हस्तौ बद्ध्वा पार्श्वे स्थितवन्तः।

तत्सन्दर्भे कश्चन गोपालः भटानां निषेधम् अविगणय्य धावन् तत्र आगतवान्। स्कन्धे स्थितं स्यूतं महाराजस्य पुरतः स्थापयन् सः उक्तवान्- "प्रभो! अहं गोपालः। राजधान्याः समीपे एव निवसन् गोपालनेन जीवामि। भवतः अस्वास्थ्यस्य वार्तां श्रुत्वा मारिकाम्बायाः मन्दिरे पूजां कारितवान्। नैवेद्यत्वेन समर्पितं मुद्रान्नम् अत्र आनीतवान्। जगदम्बायाः प्रसादस्य स्वीकारेण महाप्रबलोऽपि रोगः निवारितः भवति। कृपया प्रसादं स्वीकरोतु भवान्" इति।

गोपालतः दुर्गन्धः आगच्छति। मुद्रान्नतः अपि विचित्रः कश्चन गन्धः निस्सरति। अतः सर्वे नगरप्रमुखाः नासिकां बद्ध्वा स्थितवन्तः। महाराजः तु स्वकण्ठहारं गोपालस्य कण्ठे प्रीत्या स्थापयित्वा तं प्रेषितवान्।

एतत्सर्वं पश्यन् महाराजस्य बाल्यस्नेहितः पृष्टवान्- "महाराज! दुर्गन्धयुतं प्रसादम् आनीतवते गोपालाय भवान् कण्ठहारं दत्तवान् किल?" इति।

तदा महाराजः विशाखदत्तः उक्तवान्- "मुद्रान्नं दुर्गन्धयुतं स्यात् नाम। गोपालः अपि अशुद्धः स्यात्। किन्तु मम हितम् इच्छतः तस्य भावः तु सर्वथा शुद्धः। विरलाः किल एतादृशाः?" इति।






# मालविका

मन्दाकिनीनद्याः तीरे मरकतपुरं नाम ग्रामः आसीत्। स्वसांस्कृतिक-धार्मिक-माहात्म्येन स च ग्रामः सर्वत्र सुविख्यातः आसीत्। अस्य एव मरकतपुरस्य नर्तकी मालविका नाम। रूपेण सा अनुपमा। नृत्यविद्यया अद्वितीया च।

मरकतपुरे विजयपर्वनामकः उत्सवः प्रतिवर्षं प्रचलति स्म। तत्सन्दर्भे मालविका मन्दिरे नृत्यति स्म। तस्याः नृत्यप्रदर्शनं विना उत्सवः अपूर्णः इव।

एवं स्थिते कदाचित् विजयपर्वदिनम् आगतम्। तस्मिन् समये दुरदृष्टवशात् मालविका अस्वस्था आसीत्। अतः सा उत्सवे नृत्यं कर्तुं न शक्तवती। एतेन उत्सवे जनानां उत्साहः एव न आसीत्। सर्वेषां मनसि असन्तोषः। कथञ्चित् उत्सवः समाप्तः। उत्सवस्य अनन्तरदिने नागरिकाः मालविकायाः समीपम् आगत्य उक्तवन्तः- "मालविके! भवत्याः नृत्यस्य अभावात् उत्सवः नीरसतया सम्पन्नः। भवती शीघ्रम् एव स्वस्था भवतु। आगामिनि उत्सवे भवती केनापि कारणेन अस्वस्था न भवतु इति वयं देवं प्रार्थितवन्तः" इति।

आत्मनः नृत्यप्रदर्शनस्य महत्त्वं श्रुत्वा मालविका सन्तुष्टा। नृत्यस्य अभावतः सर्वे खिन्ना इति ज्ञात्वा तस्याः गर्वः उत्पन्नः।

एकं वर्षम् अतीतम्। पुनरपि विजयपर्वदिनम् आगतम्। परम्परानुगुणम् उत्सवसमितेः व्यवस्थापकाः मालविकायाः नृत्यार्थं व्यवस्थां कृतवन्तः।

मालविका एतां वार्तां श्रुतवती। 'उत्सवतः पूर्वं माम् एकवारं पश्यन्तु' इति सा व्यवस्थापकेभ्यः वार्तां प्रेषितवती। व्यवस्थापकाः आश्चर्यचकिताः। पूर्वं कदापि मालविका एवं



तान् न अहूतवती आसीत्। ते तद्दिने एव मालविकायाः गृहम् आगतवन्तः।

मालविका व्यवस्थापकान् उद्दिश्य सामान्यं शिष्टाचारम् अपि न प्रदर्शितवती। सा उक्तवती- "भवन्तः इतःपूर्वं प्रतिवर्षं मम नृत्य-प्रदर्शनार्थं शतं रूप्यकाणि दत्तवन्तः। तावता धनेन अहं नृत्यं कर्तुं न शक्नोमि। यदि द्विशतं रूप्यकाणि दीयते तर्हि अस्मिन् वर्षे उत्सवे नृत्यं प्रदर्शयामि" इति।

एतत् श्रुत्वा व्यवस्थापकाः आश्चर्यचकिताः। सा अधिकं धनं पृष्टवती, तदस्तु नाम। किन्तु अविनयेन सम्भाषणरीत्या च ते बहु खिन्नाः। किञ्चित्कालं यावत् मौनं स्थित्वा ते उक्तवन्तः- "अस्तु, वयं सदस्याः परस्परं चर्चां कृत्वा निर्णयं सूचयिष्यामः" इति।

व्यवस्थापकानां मुखं दृष्टवत्याः मालविकायाः मुखे दर्पजातः हासः आगत्य गतः। "विजयपर्वदिनं यावता अपि वैभवेन आचरन्तु नाम। किन्तु मम नृत्यं विना तत् नीरसम् एव। अतः मां तोषयितुम् एते द्विशतं रूप्यकाणि अवश्यं यच्छन्ति" इति मालविकायाः विश्वासः आसीत्।

व्यवस्थापकाः मालविकायाः गृहतः आगत्य आयव्ययस्य गणनां कृतवन्तः। मालविकायै द्विशतं रूप्यकाणि दातव्यानि एव चेत् पुनरपि जनेभ्यः धनं सङ्ग्रहणीयं भवति। किन्तु तद्देशस्य नियमः आसीत् यत् जनेभ्यः सङ्ग्रहणीयस्य धनस्य मितिः आसीत्। अधिकं सङ्ग्रहणीयं चेत् महाराजस्य अनुमतिः अपेक्षिता।

अतः उत्सवव्यवस्थापकाः एकं प्रतिनिधिं महाराजस्य समीपं प्रेषितवन्तः। प्रतिनिधिः राजधानीं गत्वा महाराजाय समग्रं वृत्तान्तं निवेदितवान्।

महाराजः कृष्णदेवः धार्मिकः विवेकशीलः च। सः प्रतिनिधेः वचनं श्रुत्वा उक्तवान्- "जनेभ्यः पुनः साहाय्यधनस्य सङ्ग्रहः मास्तु। यावत् न्यूनं भवति तावत् अहं ददामि। अन्यच्च चन्द्रशेखरस्वामी नाम संन्यासी अत्र राजधानीम् आगतः अस्ति।

विजयपर्वसन्दर्भे मरकतपुरे उपस्थातुं तं महात्मानम् अहं प्रार्थयामि। मालविकायाः नृत्यप्रदर्शनस्य पूर्वदिने एतस्य महात्मनः उपन्यासः भवतु। एतदर्थं योग्यव्यवस्थां कुर्वन्तु'' इति।

महाराजस्य कृष्णदेवस्य आदेशानुसारं मालविकायाः अपेक्षा उत्सवसमित्या अङ्गीकृता। चन्द्रशेखरस्वामिनः उपन्यासार्थम् अपि व्यवस्था कृता।

निश्चिते समये चन्द्रशेखरस्वामिना उपन्यासः आरब्धः। मालविका उपन्यासार्थं विशेषतया आमन्त्रिता आसीत्। तस्याः कृते विशेषतया आसनव्यवस्था अपि कृता आसीत्। उपन्यासे स्वामी उक्तवान् ''प्रेम्णः अन्यत् स्वरूपं करुणा। स्त्री स्वभावतः प्रेमस्वरूपिणी। यतः सा स्वशरीरतः अन्यं जीवं जनयति। गृहिणीरूपेण मातृरूपेण च सा स्वप्रेम सर्वेषु वितरति।

पुत्रः कदाचित् यदि वदति- 'अम्ब! भवत्याः अनुपस्थित्या अहं भीतः' इति, तर्हि माता चिन्तयति- 'अहं पुत्रं त्यक्त्वा कदापि दूरं न गच्छामि' इति। एवमेव यदि पतिः वदति- 'भवत्याः अनुपस्थित्या अहं क्लेशम् अनुभूतवान्' इति, तर्हि अपि सा चिन्तयति- 'अहम् इतःपरं कुत्रापि न गच्छामि' इति। एषः तस्याः स्वभावः।

किन्तु कदाचित् सा स्वार्थलोलुपा भवेत्। तदा तस्यां प्रेम करुणा इत्यादयः न दृश्यन्ते। धनविषये अधिकं महत्त्वं यच्छन्ती सा स्वार्थ-



लाभार्थं जनानां विश्वासस्य आदरस्य च उपयोगं करोति। एवं किमर्थं भवति? तत्र एकम् एव कारणम्- सा प्रेमतत्त्वं न जानाति। येषां हृदयं कोमलं ते अन्येषां प्रेम आदरं च सम्यक् जानान्ति। येषां हृदयं कठिनं ते अन्येषां प्रेम्णः आदरस्य च दुरुपयोगं स्वीकुर्वन्ति . . ."

एवम् एव बहुभिः उदाहरणैः चन्द्रशेखरस्वामी प्रवचनं कुर्वन् आसीत्। एतत् सर्वं शृण्वत्याः मालविकायाः मनसि विप्लवः उत्पन्नः आसीत्।

प्रवचनसमाप्त्यनन्तरं मालविका सन्यासिनः पादयोः पतितवती। अश्रुपूर्णाभ्यां नेत्राभ्यां तं पश्यन्ती गद्गदस्वरेण उक्तवती- "महात्मन्! क्षमाभिक्षया माम् अनुगृह्णातु भवान्" इति।

चन्द्रशेखरस्वामी न अन्यः, सः स्वयं कृष्णदेवमहाराजः। सः स्वकपटवेषं निष्कास्य उक्तवान्- "मालविके! अहं भवत्याः नृत्यप्रौढतां श्रुतवान् आसम्। भवतीं मम आस्थानं प्रति आह्वातुं चिन्तयन् आसं च। अत्रान्तरे विजयोत्सवस्य व्यवस्थापकसमितेः परतयाकश्चित् मम समीपम् आगतवान्। तद्द्वारा 'कलाकाराणाम् अशोभनकरः अहङ्कारः भवतीं प्रविष्टः' इति अहं ज्ञातवान्। तस्य अहङ्कारस्य निवारणार्थम् स्वयम् अत्र आगतवान्" इति।

पुरतः स्थितः स्वयं कृष्णदेवमहाराजः इति ज्ञात्वा मालविका आनन्दम् आश्चर्यं लज्जां च अनुभूतवती। तस्मिन् वर्षे सा विजयपर्वसन्दर्भे असदृशं मनमोहकं श्रेष्ठं च नृत्यं प्रदर्शितवती। एतदनन्तरं कृष्णदेवः ता राजधानीम् आहूय राजनर्तकीपदे नियोजितवान्।

इदानीं मालविका विनयशीला। उच्चपदे नियुक्ता अपि तस्याः गर्वः नास्ति। सा इदानीं प्रतिवर्षं विजयपर्वसन्दर्भे मरकतपुरम् आगच्छति। मन्दाकिनीदेव्याः मन्दिरस्य पुरतः स्वनृत्यं प्रदर्शयति च।






# वैराग्यम्

(गतसचिकायाः कथायाः उत्तरार्धम्)

महाजनकः सम्यक् पर्यालोच्य संन्यासधर्मं स्वीकर्तुं मनसि निश्चयं कृतवान्। अनन्तरं सः राजभवनस्य उपरि अट्टे उपविष्टवान्। यं कमपि द्रष्टुम् अपि अनिच्छन् सः मौनम् अवलम्बितवान्। तथैव मासचतुष्टयं यापितवान् च। राजभवनम् अपि तस्मै कारागारवत् भासते स्म। अतः सः तत् स्थानं परित्यज्य गन्तुम् उपायं चिन्तितवान्।

सः काषायवस्त्राणि मृत्पात्रं च आनेतुं सेवकं आदिष्टवान्। क्षौरिकम् आनाय्य स्वमस्तकस्य मुण्डनं कारितवान्। परेद्युः सः काषायवस्त्राणि धृत्वा एकस्मिन् हस्ते मृत्पात्रम्, अन्यस्मिन् हस्ते दीर्घं दण्डं च गृहीत्वा अधः अवतीर्य आगतवान्। तदा यद्यपि राज्ञी तं दृष्टवती, तथापि यः कश्चित् संन्यासी महाराजस्य दर्शनार्थम् आगत्य प्रतिगच्छति इत्येव भावितवती।

किन्तु शीघ्रम् एव वास्तववृत्तान्तं सा ज्ञात्वा राजभवनस्य उपरि गतवती। अधः पतितं पत्युः केशराशिं दृष्टवती च। सम्भ्रान्ता सा राजभवने सर्वत्र अन्वेषणं कृतवती। महाजनकः कुत्रापि न आसीत्। महाराजः संन्यासं स्वीकृतवान् इति विचारः सेवकैः निवेदितः। राजभवने सर्वत्र रोदनध्वनिः व्यापृतः। रुदन्तः एव केचन महाराजम् अनुसृत्य गतवन्तः। सीवलीदेवी अपि अन्यराज्ञीभिः सह शीघ्रं पत्युः समीपं गत्वा राजभवनं प्रत्यागन्तुं प्रार्थितवती। किन्तु तस्याः प्रयत्नः निष्फलः जातः।

सीवलीदेवी सेनानायकम् आहूय एकान्ते मन्त्रालोचनं कृत्वा नगरे अनेकेषु स्थानेषु अग्निं ज्वालितवती। पत्युः समीपं गत्वा "भोः महाराज! भवतः मिथिलानगरी अग्निना व्याप्ता अस्ति। भवतः सम्पूर्णां सम्पत्तिम् अग्निः

नाशयन् अस्ति । तां रक्षतु" इति उक्तवती च ।

"भोः राज्ञि ! इदानीं मदीया सम्पत्तिः इति किञ्चित् अपि नास्ति एव। एवं हि सति मम सम्पत्तिः नश्यति इति वचनं कथं सङ्गच्छते ?" इति पृष्ट्वा महाजनकः अग्रे गतवान् । राज्ञी नगरवासिनः च तम् अनुसृतवन्तः ।

तान् वारयितुं सः परिवृत्य स्थित्वा "अस्य नगरस्य अधिपतिः कः इति भवताम् अभिप्रायः ?" इति पृष्टवान् । तं विचित्र-प्रश्नं श्रुत्वा "नूनं भवान् एव भोः महाराज" इति ते सर्वे उक्तवन्तः ।

"एवं तर्हि एतस्याः रेखायाः उल्लङ्घनं यः करोति सः दण्डनीयः" इति उक्त्वा सः स्वीयदण्डेन मार्गे एकां रेखां कृत्वा अग्रे गतवान् ।

मन्त्रमुग्धाः इव जनाः किञ्चित्कालं यावत् रेखां न उल्लङ्घितवन्तः । किन्तु शीघ्रं शीघ्रं गच्छन्तं स्वीयं पतिं दृष्ट्वा भीता सीवलीदेवी रेखाम् उल्लङ्घ्य अग्रे धावितवती । तदा अन्य-जनाः अपि रेखाम् अतिक्रम्य धावितवन्तः ।

शीघ्रम् एव राज्ञी पत्युः समीपं गत्वा तस्य पादयोः उपरि पतित्वा "एतान् नागरिकान् पश्यतु । भवतः प्रत्यागमनं सर्वे याचमानाः सन्ति । तेषाम् इच्छां पूरयतु" इति प्रार्थितवती ।

"अहं तान् सर्वान् परीक्षितवान् । अतः परिजनं बन्धुमित्रादिकं च सर्वं परित्यज्य गच्छन् अस्मि" इति उक्तवान् महाजनकः ।



"भवान् संन्यासं स्वीकरोति चेत् मम का गतिः ?" इति पृष्टवती राज्ञी ।

"भवतः पुत्रः कायेन वाचा मनसा कर्मणा च पापाचरणानि अकुर्वन् यथा राज्यं परिपालयेत् तथा व्यवस्थां करोतु" इति उक्तवान् राजा ।

एवंरीत्या सम्भाषणतत्पराः सर्वे गच्छन्ति स्म । सूर्यः अस्तं गतः । एकस्मिन् समुचित-प्रदेशे तैः सा रात्रिः नीता । पुनः प्रभाते उत्थाय महाजनकः प्रयाणम् आरब्धवान् ।

राज्ञी स्वीयपरिवाराय 'शनैः आगच्छन्तु' इति निर्देशनं दत्त्वा, स्वयं एकाकिनी पतिम् अनुसृतवती ।

तथा गच्छन्तौ तौ एकं नगरं प्रविष्टवन्तौ । नगरस्य द्वारसमीपे केचन बालाः क्रीडन्ति स्म एका बाला एकस्मिन् शूर्पे किमपि निक्षिप्य तत् शुद्धीकरोति स्म । तस्याः एकस्मिन् हस्ते एकः वलयः आसीत्, अन्यस्मिन् हस्ते वलयद्वयम् । यदा सा शूर्पम् उन्नीय निष्पवनं करोति, तदा वलयद्वयं शब्दं करोति ।

एतत् दृष्ट्वा महाजनकः स्वपत्नीम् नीतिं पाठयितुम् इच्छन्, तां बालां पृष्टवान्- "बाले, भवत्याः एकेन हस्तेन शब्दः निस्सरति, अन्येन कोऽपि शब्दः किमर्थं नास्ति" इति ।

तदा सा बाला "एतस्मिन् हस्ते वलयद्वयम् अस्ति । अतः शब्दः उत्पद्यते । अन्यस्मिन् एकः एव वलयः अस्ति खलु ? अतः तादृशः अनर्थशब्दः न भवति" इति उक्तवती ।



राजा सीवलीदेवीं दृष्ट्वा "तस्याः बालायाः वचनं श्रुतवती खलु ? द्वितीयः हस्तः नाम केवलम् अनर्थशब्दोत्पादकः। माम् अनुसर्तुं भवत्याः अवकाशं ददामि चेत्, तया बालया उक्तस्य नीतिवाक्यस्य उल्लङ्घनं भवति" इति उक्तवान्।

राज्ञी शिरः अवनमय्य अग्रे गन्तुं पत्युः अवकाशं दत्तवती। किन्तु उत्तरक्षणे एव तस्याः शोकसागरः प्रवृद्धः। तदा पुनः झटिति सा धावन्ती गत्वा पत्या सह चलितुम् आरब्धवती। तौ द्वौ अपि किञ्चिद्दूरं गत्वा एकस्य लोहकारस्य आपणसमीपं प्राप्तवन्तौ।

तत्र लोहकारः बाणम् उत्पादयति स्म। बाणस्य अग्रभागः समीचीनः अस्ति वा न वा इति परीक्षितुं सः तं बाणं एकस्य नेत्रस्य पुरतः निक्षिप्य अन्यत् नेत्रं निमील्यति स्म।

"किं भोः, भवतः नेत्रद्वयम् अस्ति। किन्तु एकं नेत्रं किमर्थं निमीलितवान् ?" इति महाजनकः लोहकारं पृष्टवान्।

"नेत्रद्वयम् अपि उन्मील्यामि चेत्, बाणाग्रभागं परीक्षितुं शक्यते वा ? बाणः ऋजुः वा वक्रः वा इति ज्ञातुम् एकेन एव नेत्रेण द्रष्टव्यम्। द्वितीयेन तु अनर्थदर्शनम् एव स्यात् !" इति उक्तवान् लोहकारः।

"श्रुतवती वा ?" इति पृष्टवान् महाजनकः पत्नीं दृष्ट्वा। 'स्वीयपतिं वशीकर्तुम् अहम् असमर्था' इति सीवलीदेवी ज्ञातवती। अतीव दुःखिता सा अचेतना भूत्वा अधः पतितवती। तदा महाजनकः अग्रे गत्वा अरण्यं प्रविश्य कुत्रचित् दूरं गतवान्।

किञ्चित्कालानन्तरं परिजनाः तत्र आगतवन्तः। अचेतनां राज्ञीं शैत्योपचारैः जागरितवन्तः। अनन्तरं सा मिथिलानगरं प्रत्यागत्य स्वीयपुत्रस्य राज्याभिषेककार्यं कारितवती। तदनन्तरं सा उद्याने एकां पर्णशालां निर्माय तत्र संन्यासिनीवत् जीवनं यापितवती।

महाजनकः हिमालयं गत्वा तत्र तपः आचर्य सिद्धिं सम्पादितवान्।






# बदरीनाथः केदारनाथः च ।

प्राचीनकालतः अपि हिमालयः पवित्रसमत्वेन गण्यते। महाकविः कालिदासः हिमालयं 'देवतात्मा' इति वर्णयति। देवाः गन्धर्वाः यक्षाः च अत्र निवसन्ति इति प्रथा अस्ति। भारतस्य जीवनद्यः सर्वाः हिमालयतः उद्भवन्ति।

बहवः जिज्ञासवः साधुसन्यासिनः च प्रशान्तपरिसरम् अन्विष्यन्तः हिमालयं गच्छन्ति। असङ्ख्याकाः सन्यासिनः इदानीम् अपि अत्र निवसन्ति। अस्यां पर्वतश्रेणौ अनेकानि पवित्रस्थलानि सन्ति।





हिमालये स्थितेषु पवित्रक्षेत्रेषु बदरीनाथः प्रधानम्। 'विष्णुक्षेत्रे अस्मिन् पूर्वं व्यासमहर्षिणः मुखतः महाभारतवाणी निर्गता। तां च गणपतिः उल्लिखितवान्' इति श्रूयते।




समुद्रस्तरतः ११,७३५ पादमितायाम् उन्नतौ केदारनाथदेवालयः अस्ति। एतत् सुप्रसिद्धं शिवक्षेत्रम्। यद्यपि अत्र गमनं कष्टसाध्यं तथापि जनाः शतशः वर्षेभ्यः बहुसङ्ख्यया प्रतिदिनम् आगच्छन्ति।

द्रौपदीसहितानां पञ्चपाण्डवानां महाप्रस्थानम् एतन्मार्गेण एव प्रवृत्तम् इति श्रूयते। मार्गे द्रौपदी प्रथमं मरणं गता। तदनन्तरं सहदेवः मार्गायासकष्टं सोढुम् अशक्तः केदारनाथसमीपे मृत्युम् आलिङ्गितवान्।





'रुद्रहिमालयः' इति प्रसिद्धे अस्मिन् प्रदेशे धर्मराजः शिवरूपं प्रत्यक्षीकृत्य पूजितवान्। तदारभ्य केदारनाथे शिवाराधनम् अविच्छिन्नतया प्रचलति एव। इदानीम् अपि अनुवर्तते।

भक्तिपरवशाः यात्रिकाः मार्गे आगतान् विघ्नान् न परिगणयन्ति एव। केदारनाथस्य दर्शनेन ते आत्मानं धन्यं मन्यन्ते। बदरीनाथे इव केदारनाथे अपि मन्दिरं षण्मासं यावत् पिहितं भवति। तत्समये उखीमठे विग्रहस्य।प्रतिरूपस्य पूजा प्रचलति।





पुरातनकाले एव बदरीनाथक्षेत्रे विष्णुमन्दिरम् निर्मितम् आसीत्। किन्तु शिखरभूभागपतनेन मन्दिरं नष्टम् अभवत्। देवमूर्तिः च अलकानद्यां पतिता।

आदिशङ्कराचार्यः भारतयात्रासन्दर्भे अत्रापि आगतवान् आसीत्। ध्यानबलेन सः विग्रहस्थानं ज्ञातवान्। अनन्तरं देवमूर्तिम् आनीय नूतनतया निर्मिते मन्दिरे पुनः प्रतिष्ठापितवान्। पूजादिकं व्यवस्थापितवान् च।





आदिशङ्करेण आरब्धा व्यवस्था इदानीम् अपि प्रचलति। पूर्वं एतत् प्रदेशं प्रति पादाभ्याम् एव गन्तव्यम् आसीत्। तदपि महता कष्टेन! इदानीं तु तथा नास्ति। वाहनसौकर्यम् उपकल्पितम् अस्ति।

हिमपातकारणतः वर्षे षण्मासं यावत् देवालयः पिहितः भवति। तत्समये अत्र कोऽपि न निवसति। कोऽपि गन्तुं न शक्नोति अपि। किन्तु एतेन मूर्तेः पूजा स्थगिता न भवति। तस्य देवविग्रहस्य प्रतिरूपस्य पूजा जोषीमठे प्रचलति।






मन्दिरस्य द्वारस्य पिधानतः पूर्वं पूजकः विग्रहस्य पुरतः दीपं ज्वालयति। षण्मासानन्तरं पुनः यदा द्वारम् उद्घाट्यते तदा अपि दीपः ज्वलन् एव दृश्यते इति प्रथा अस्ति। एतत् च एतस्य पुण्यक्षेत्रस्य वैशिष्ट्यम्।



# विजयरहस्यम्

उजबेकिस्ताननगरस्य पालनं कमलुद्दीनः नाम महाराजः करोति स्म। सः इदानीम् अपि युवकः। स्वभावेन विलासप्रियः अपि। दिनस्य अधिकभागं सः मनोरञ्जनकार्यक्रमेषु नृत्येषु पानगोष्ठीषु च यापयति स्म। शासनादिव्यवहारे जनानां समस्यानां निवारणे वा तस्य रुचिः न आसीत् एव।

एकदा राजा एकान्ते उपविष्टवान् आसीत्। तदा मुख्यमन्त्री तत्र आगत्य उक्तवान्- "महाराज! गुप्तचराणां द्वारा ज्ञातं यत् पार्श्वदेशीयः राजा अस्माकं दुर्गस्य उपरि आक्रमणं कर्तुं सज्जीभवन् अस्ति इति। तस्य आक्रमणं सम्मुखीकर्तुं विशेषसिद्धता करणीया अस्ति" इति।

महाराजः मुख्यमन्त्रिणं उदासीनभावनया पश्यन् उक्तवान्- "अस्माकं समीपे इदानीम् एव महती सेना अस्ति। शूराधिशूराः सेनापतयः सन्ति। अतः कस्यापि आक्रमणेन भेत्तव्यं किमपि नास्ति" इति।

तत् श्रुत्वा मन्त्री मौनं ततः निर्गतवान्।

मन्त्रिणा यथा चिन्तितं तथैव एकसप्ताहाभ्यन्तरे शत्रुः सेनया सह आगत्य आक्रमणं कृतवान्। सेनापतयः स्वस्वदलेन सह रणरङ्गं प्रविष्टवन्तः। तथापि जयः न प्राप्तः। बहवः मृताः। केचन पलायितवन्तः। केचन बन्दीभूताः। दुर्गं शत्रुवशे आगतम्।

असहायः महाराजः कमलुद्दीनः गुप्तमार्गेण ततः पलायितवान्। समीपे स्थितस्य बान्धवस्य अन्यराजस्य आश्रये स्थितवान् च। एतस्य बन्धुराजस्य दुर्गं सुदृढम् आसीत्। दुर्गं परितः परिखा निर्मिता आसीत्।

कानिचन दिनानि अतीतानि। एकदा कमलुद्दीनः स्वबान्धवं महाराजं पृष्टवान्- "अहं नष्टं मदीयं राज्यं पुनः प्राप्तुम् इच्छामि।

भवान् साहाय्यं करोति वा ?" इति ।

बन्धुराजः तु कमलुद्दीनं पुत्रम् इव प्रीत्या पश्यति स्म। अतः सः कमलुद्दीनस्य वचनेन बहु सन्तुष्टः। सः पृष्टवान्- "भवान् स्वराज्यं प्राप्तुं प्रयत्नं कर्तुम् इच्छति इत्येतदतिरिच्य किमन्यः सन्तोषस्य विषयः स्यात् ?" इति ।

बन्धुराजः कमलुद्दीनेन सह स्वसैन्यं प्रेषितवान्। कमलुद्दीनः सैन्येन सह प्रस्थितः। गमनसमये मार्गपार्श्वे सः शीतलच्छायासहितं वृक्षं दृष्टवान्। विश्रान्तिसुखम् अनुभवितुम् इच्छन् सः छायायाम् उपविष्टवान्। तत्सन्दर्भे तस्य मनसि कश्चन विचारः उत्पन्नः- "शत्रुपराजयार्थम् एतावती महासेना अस्ति। एवं स्थिते युद्धे मम आवश्यकता किमर्थम् ? एते सैनिकाः विनायासेन शत्रून् पराजयन्ते" इति।

कमलुद्दीनः सेनापतिम् आहूय उक्तवान्- "अहं भवतः पराक्रमविषये बहु श्रुतवान्। अतः भवान् सेनया सह गत्वा दुर्गम् आक्रम्य शत्रून् पराजित्य आगच्छतु। विजयवार्तां मां श्रावयतु। तावत्पर्यन्तम् अहम् अत्र छायायाम् उपविशामि" इति।

सेना अग्रे गता। कमलुद्दीनः अश्वम् एकत्र बद्धवान्। छायायाम् उपविश्य शीतलां सुरां पिबन् विजयवार्तां प्रतीक्षमाणः सिंहासनारोहणस्य स्वप्नं पश्यन् आसीत्। सायङ्कालतः पूर्वं वार्ता आगता यत् सेना पराजिता, अवशिष्टाः सैनिकाः बद्धाः इति।

वार्तां श्रुतवतः कमलुद्दीनस्य हस्ततः सुरा



चक्रकः भूमौ पतितः। तस्य मनसि इदानीं दिग्भ्रमः। केन वा धैर्येण बान्धवाय मुखं प्रदर्शयितुं शक्यम्? बन्धुसमीपं गत्वा किं वा समाधानं वक्तव्यम्? अतः कमलुद्दीनः ततः प्रस्थितः। मतिभ्रष्टः इव सर्वत्र अटितवान्। एवं सञ्चारं कुर्वन् अन्ते खुदीदाननामकस्य आस्थानं प्रविष्टवान्।

कमलुद्दीनः स्वपरिचयं कुत्रापि न उक्तवान्। क्रमशः सः महाराजस्य विश्वासं सम्पादितवान्। खुदीदानस्य अङ्गरक्षकस्थाने नियुक्तः अभवत् च।

एवं स्थिते कदाचित् पार्श्वदेशीयः राजा अकस्मात् आक्रमणं कृतवान्। खुदीदानः तु महत्या श्रद्धया सेनां चालयन् स्वयं सेनानायकत्वं निर्वहन् शत्रूणाम् उपरि प्रत्याक्रमणं कृतवान्।

खुदीदानस्य सेनायां पराक्रमिणः सैनिकाः समर्थाः सेनानायकाः च आसन् एव। तथापि सः स्वयं सेनासञ्चालनं कुर्वन् अस्ति। कमलुद्दीनस्य तु एषः आश्चर्यस्य विषयः आसीत्।

युद्धे खुदीदानस्य सेना शत्रुसेनां सम्यक् पीडितवती। अनन्यगत्या शत्रवः पलायनमन्त्रं पठितवन्तः। अनन्तरदिने कमलुद्दीनः खुदीदानं पृष्टवान्- "महाराज! भवतः सेनायां महा-पराक्रमिणः सैनिकाः शूरातिशूराः सेनानायकाः च सन्ति। तथापि तान् सर्वान् अविगणय्य भवान् एव किमर्थं नायकत्वं निरूढवान्?" इति।

"कमलुद्दान! केवलसैन्येन शूरैः सैनिकैः



पराक्रमिभिः सेनापतिभिः वा किमपि न सिध्यति। ते एव सर्वं कुर्वन्ति इति तु भ्रमः एव। यदा राजा सेनां चालयन् अग्रे तिष्ठति तदा एव सेनापतयः सैनिकाः च प्राणान् पणीकृत्य युद्धं कुर्वन्ति। तदा एव विजयः। रणरङ्गे महाराजस्य उपस्थितिः एव विजयस्य कारणं भवति'' इति हसन् उक्तवान् खुदीदानः।

कमलुद्दीनः खुदीदानस्य वचनस्य सत्यतां ज्ञातवान्। तादृने रात्रौ एव अश्वम् आरुह्य सः स्वराज्यम् उद्दिश्य प्रस्थितवान्। अनन्तरदिने दुर्गद्वारस्य समीपम् आगतवान् च।

द्वाररक्षकाः कमलुद्दीनाय अन्तः गन्तुम् अवकाशं न दत्तवन्तः।

''किम् एतत्? भवन्तः मम सेवकाः! मां न जानन्ति वा भवन्तः? अहं भवतां महाराजः कमलुद्दीनः अस्मि'' इति सः उच्चैः उक्तवान्।

सेवकाः कमलुद्दीनस्य स्वरं ज्ञातवन्तः। महता सन्तोषेण ते कमलुद्दीनं समीपस्थम् एकं गृहं प्रति नीतवन्तः। तत्र केचन कमलुद्दीन-पक्षीयाः सम्मिलिताः आसन्। ते चिन्तयन्तः आसन् यत्- दुराचारी नूतनः राजा कथं निवारणीयः इति। तत्समये कमलुद्दीनः तत्र गतवान्।

इदानीं राजभक्तानां गजबलम् आगतम्। ते उत्साहेन कार्ये प्रवृत्ताः। अग्रे किं किं करणीयम् इति ते व्यवस्थितयोजनां कृतवन्तः। नूतनराजविषये ये असन्तुष्टाः सन्ति, तान् सम्पर्क्य कमलुद्दीनस्य आगमनवार्तां निवेद्य सङ्घटनं कृतवन्तः। सप्ताहद्वयाभ्यन्तरे राज्ये अकस्मात् विद्रोहः उत्पन्नः। दुराचारी राजा बन्धने स्थापितः। कमलुद्दीनः पुनः अपि सिंहासनम् आरूढवान्।

इदानीं कमलुद्दीनस्य जीवनं सर्वथा परिवर्तितम् अस्ति। सः भोगविलासादिभ्यः विमुखः आसीत्। प्रजानां हितम् एव प्रथम-कर्तव्यम् भावयति स्म सः। एतेन कमलुद्दीनः अचिरात् एव जनप्रियः जातः।





# मार्गदर्शकः

पूर्वं रामपुरग्रामे वल्लभदेवः कृषिकः आसीत्। तस्य एकमात्रपुत्रः शिवः। शिवः बाल्यात् अपि अतीव अलसः। विद्यार्जने कृषिकार्ये च अनासक्तः सः अप्रयोजकः अभवत्। सः प्रतिदिनम् आकण्ठं भुक्त्वा सम्यक् निद्रां करोति स्म। जनाः तम् 'अलसः शिवः' इत्येव आह्वयन्ति स्म। वल्लभदेवः तु ''तारुण्ये प्राप्ते सत्यपि पुत्रस्य आलस्यप्रवृत्तिः न दूरङ्गता किल'' इति सङ्कटम् अनुभवति स्म।

एवं कालचक्रं चलति स्म। कदाचित् वल्लभदेवस्य परमाप्तमित्रस्य प्रभुदेवस्य महत् सङ्कटं संप्राप्तम्। तस्य पुत्र्याः विवाहः निश्चितः आसीत्। वरः नगरे उद्योगी। सः वरदक्षिणारूपेण धनम् एव इच्छति, न तु भूमिम्। प्रभुदेवः एतत् अङ्गीकृतवान् आसीत्। प्रभुदेवः चिन्तितवान्- 'मम तु सुवर्णसदृशी फलवती भूमिः। अहं यदा कदा वा तां विक्रेतुं शक्नोमि। जनाः अहमहमिकया आगत्य भूमिं क्रेष्यन्ति'' इति। अतः सः भूमेः विक्रयणविषये विलम्बम् आचरितवान्। विवाहः यदा समीपम् आगतः तदा सः भूमिं विक्रेतुं प्रयत्नम् आरब्धवान्। तदा जनाः सन्दर्भस्य दुरुपयोगं स्वीकुर्वन्तः अतिन्यूनमूल्येन भूमिं पृष्टवन्तः।

तदा किंकर्तव्यतामूढः प्रभुदेवः वल्लभदेवस्य समीपम् आगत्य सर्वं निवेदितवान्। वल्लभदेवः अपि इदानीं किं करणीयम् इति न जानाति। तदा सर्वं श्रृण्वन् मञ्चे एव सुप्तः शिवः उक्तवान्- ''अत्र चिन्तयितुं किम् अस्ति? भवतः भूमेः पार्श्वे एव ग्रामाधिकारिणः भूमिः अस्ति। तस्मै सर्वां परिस्थितिं निवेदयतु। सः एव भवतः भूमिं युक्तमूल्येन क्रेष्यति। महताम् आचारः अपि महान् एव''

"सुभद्रा"



इति।

"तदपि सत्यम्। एषः विचारः मम मनसि न आगतः एव" इति वदन् प्रभुदेवः त्वरया ततः गतवान्।

ग्रामाधिकारी सरलः सज्जनः आढ्यः च आसीत्। तस्य समीपे आगताः याचकाः कदापि रिक्तहस्तेन न प्रतिनिवर्तन्ते स्म। तस्य गृहम् आगताः अतिथयः अपि आकण्ठम् भुक्त्वा योग्यं सम्माननं च लब्ध्वा एव प्रतिष्ठन्ते स्म। दैवनुग्रहेण पुत्राः अपि विनीताः, पत्नी अपि अनुकूला आसीत्। अतः उदारी ग्रामाधिकारी इत्येव सर्वे ग्रामीणाः कथयन्ति स्म।

प्रभुदेवः यदा ग्रामाधिकारिणः गृहं प्राप्तवान् तदा सः आसन्दे उपविष्टः आसीत्। प्रभुदेवं दृष्ट्वा सः उत्थाय स्वागतं कृत्वा आसने उपवेश्य कुशलवार्तां पृष्टवान्। तदा प्रभुदेवः स्वीयं सर्वं वृत्तान्तं निवेद्य साहाय्यं याचितवान्। अनन्तरं प्रभुदेवस्य भूमिं ग्रामाधिकारी युक्तमूल्येन क्रीतवान्। निश्चिते मुहूर्ते विवाहः निर्विघ्नं सवैभवं च समाप्तः। प्रभुदेवः शिवस्य सामयिकीं सूचनां बहु श्लाघितवान्।

कानिचन दिनानि अतीतानि। एकस्मिन् दिने पुनः वल्लभदेवः प्रभुदेवः च मिलितवन्तौ। परस्परवार्तालापसन्दर्भे वल्लभदेवः "मम पुत्रः शिवः अप्रयोजकः अभवत् किल" इति स्वकीयं दुःखं निवेदितवान्। किञ्चित् कालं तूष्णीम् उपविश्य प्रभुदेवः उक्तवान्- "शिवः अलसः स्यात् नाम। किन्तु तस्य सूक्ष्मा बुद्धिशक्तिः अस्ति। अहं तं कथञ्चित् उद्योगिनं करिष्यामि" इति।

अनन्तरं प्रभुदेवः शिवम् उत्थाप्य- "अरे शिव! सर्वे अपि भवन्तम् अलसः अप्रयोजकः इति वदन्ति। श्रोतुं लज्जा न भवति वा?" इति।

शिवः नेत्रं निमील्य एव उत्तरं दत्तवान्- "तेषां वचनेषु तथ्यम् अस्ति। अहं निश्चयेन अप्रयोजकः सत्यश्रवणेन कोपः किमर्थम्?" इति।

"तत् किमपि भवतु। मम दृष्ट्या तु



भवान् योग्यः समर्थः च। भवता सूचितेन विचारेण एव मम समस्या परिहृता। अद्य आरभ्य भवान् 'सर्वेभ्यः दुःखपरिहारार्थं सूचनादानम् एव मम कार्यम्' इति चिन्तयतु, तथैव आचरतु च। प्रयोजनं प्राप्य जनाः यथाशक्ति धनं यच्छन्ति। एवं भवतः अपि लाभः, अन्येषामपि प्रयोजनम्'' इति उक्तवान् प्रभुदेवः।

तदा शिवः उक्तवान्- ''भवान् वृथा मम विषये अधिकं चिन्तयति। वस्तुतः मयि काऽपि शक्तिः नास्ति। न अहं मेधावी अपि'' इति।

''तत्सर्वस्य निर्णयं वयं कुर्मः। किञ्चित् कालं यावत् अहं यथा वदामि तथा आचरतु'' इति प्रभुदेवः उक्तवान्।

अनन्तरं सः गृहस्य पुरतः एव शिवाय एकां शय्यां विरचय्य तत्रैव शयनं कर्तुं शिवं सूचितवान्। एकस्मिन् फलके ''अत्र कालानुकूलाः सूचनाः दीयन्ते'' इति विलिख्य शिवस्य मञ्चस्य समीपे स्थापितवान्। प्रभुदेवः अपि तेन सह उपविष्टवान्। गमनागमनसमये जनाः तत्फलकं दृष्ट्वा उपहासं कृतवन्तः। एकः अपि प्रष्टा न आगतवान्।

''कः एषः असङ्गतः व्यवहारः? किमर्थं वा मां सुखेन शयनं कर्तुम् अपि न त्यजति भवान्?'' इति शिवः उदासीनतां प्रकटयन् उक्तवान्।

''शिव! त्वरा मास्तु। भवता सह अहम् अपि उपविशामि किल? किञ्चित्कालपर्यन्तं निरीक्षणं कुर्मः। जनाः आगमिष्यन्ति एव'' इति उक्तवान् प्रभुदेवः।

परेद्युः कश्चन गोपालः तेन मार्गेण गच्छन् आसीत्। तत् फलकं दृष्ट्वा सः ''किम् एतत्?'' इति पृष्टवान्।

प्रभुदेवः उक्तवान्- ''अत्र दुःखतप्तानां दुःखस्य परिहारार्थं मार्गः सूच्यते। तदर्थं यथाशक्ति धनं दातव्यम्'' इति।

''एवं वा?'' इति उद्गारं प्रकटयन् गोपालः उक्तवान्- ''अस्माकं ग्रामे मेषाणाम् आहारार्थं तृणानि न सन्ति। अतः वयं सर्वे



इदानीं ग्रामं परित्यज्य दूरस्थं पर्वतप्रान्तम् आश्रितवन्तः। किन्तु तत्र वृकेभ्यः भयम्। सर्वे वयं जागरूकतया उपविश्य अहोरात्रं रक्षणं कुर्मः। तथापि केनापि उपायेन अस्माकं वसतिं प्रविश्य वृकाः मेषान् उन्नीय गच्छन्ति। वृकाणां पीडा कथं निवारणीया इति न जानीमः'' इति।

शिवः भित्तिम् अवलम्ब्य उपविष्टः एव उक्तवान्- ''भोः! सर्वेषां जागरणं किमर्थम्? प्रतिदिनं भवत्सु एकः जागरूकतया स्थित्वा रात्रौ ढक्कां वादयतु। शब्देन वृकाः समीपं न आगच्छन्ति। पर्यायक्रमेण प्रतिदिनम् एकः ढक्कां वादयतु। इतरे निद्रां कुर्वन्तु नाम'' इति।

''अहो! युक्तः परिहारः। हन्त, मन्दबुद्धेः मम एषः उपायः न स्फुरितः'' इति उक्त्वा गोपालः अर्धरूप्यकं दत्त्वा गतवान्।

शिवस्य सूचनया गोपालस्य दुःखं परिहृतम् इति वार्ता सर्वत्र प्रसृता। तद्दिनादारभ्य जनाः समस्यानां परिहारार्थं शिवस्य समीपम् आगन्तुम् आरब्धवन्तः। शिवस्य धनार्जनम् अपि क्रमेण प्रवृद्धम्।

शिवस्य वार्ता ग्रामाधिकारिणः समीपं गता। सः एतम् आहूय उक्तवान्- ''शिव, भवान् पीडानां परिहारकथने समर्थः इति श्रुतवान्। मम एका समस्या अस्ति। मम जामाता पानासक्तः जातः। तस्य दुरभ्यासः कथं निवारणीयः? कमपि उपायं सूचयतु'' इति।

''स्वामिन्! एवं करोतु– वैद्यतः वमनकारकम् औषधं स्वीकृत्य मद्ये सम्मिश्र्य ददातु। यदा सः वमनं करोति तदा तमेव वैद्यम् आहूय वमनशङ्कानिवारकम् औषधं दापयतु। अनन्तरं वैद्यः वदतु– 'मद्यकारणतः एव एवं जातम्। अद्य समये औषधं स्वीकृतम्। अतः भवान् जीवितः। अन्यथा प्राणापायः भवेत्। इतःपरं मद्यपानं सर्वथा न करणीयम्' इति। एतदनन्तरं भवतः जामाता मद्यं स्प्रष्टुम् अपि न इच्छति'' इति शिवः उक्तवान्।

ग्रामाधिकारी तस्यां रात्रौ तत् नाटकं योजितवान्। नाटकं पूर्णं फलप्रदं जातम्।

ग्रामाधिकारिणः जामाता प्राणभीत्या मद्यं सम्पूर्णं त्यक्तवान्। सन्तुष्टः ग्रामाधिकारी शतं रूप्यकाणि दत्त्वा शिवं सम्मानितवान्।

एतस्याः घटनायाः अनन्तरं मासाभ्यान्तरे एव महाराजः महेन्द्रपालः शिवाय आमन्त्रणं प्रेषितवान्।

यतः- राजा महेन्द्रपालः अस्वस्थः आसीत्। तं विचारं ज्ञात्वा शत्रुराजः विक्रमवर्मा युद्धार्थं सन्नद्धः अभवत्। ग्रामाधिकारिणः महाराजस्य च सम्बन्धः स्नेहयुक्तः अपि आसीत्। ग्रामाधिकारी महाराजाय शिवस्य मार्गदर्शन-सामर्थ्यम् उदाहरणपूर्वकं निवेदितवान्। 'भवतः समस्यायाः अपि ततः परिहारः लभ्येत' इति सूचितवान् अपि। अतः एव महेन्द्रपालः शिवम् आहूतवान् आसीत्।

आस्थानम् आगतं शिवं महाराजः सर्वं निवेदितवान्। तत् श्रुत्वा शिवः उक्तवान्- "महाप्रभो, भवतः अस्वास्थ्यं केवलं काल्पनिकम्। वास्तविकी स्थितिः अन्या एव अस्ति। राजा स्वतः युद्धम् उद्घोषयितुं न इच्छति। यदि शत्रुराजः विक्रमवर्मा स्वयं युद्धाय आगच्छति, तदा जेष्यामि इति इच्छया एव स्वयंमहाराजेन एवं वार्ता प्रसारिता अस्ति। राजा तु सङ्गीतसाहित्यनृत्यादिविलासे तु मग्नः अस्ति। बहिः अनारोग्यम् इति वार्ता। अन्तः युद्धस्य सर्वसिद्धता" इति सर्वत्र वार्तां प्रसारयतु। परिणामः किं भवति इति पश्यामः। एतां वार्तां यथा कथञ्चित् शत्रुराजस्य गूढपुरुषान् प्रापयतु। युद्धस्य सर्वसिद्धता अपि प्रचलतु" इति।

राजा महेन्द्रपालः शिवस्य सूचनानुसारं सर्वम् आचरितवान्। स्वगूढपुरुषैः एतं विचारं ज्ञात्वा शत्रुराजः विक्रमवर्मा युद्धसाहसं त्यक्त्वा ससैन्यं स्वनगरीं प्रतिनिवृत्तः।

राजा महेन्द्रपालः बहुसन्तुष्टः अभवत्। शिवं आप्तमन्त्रिस्थाने नियोज्य अधिकं वेतनम् अपि निश्चितवान्। अनन्तरं शिवस्य नाम मन्त्रिशिवाचार्यः इति प्रसिद्धम् अभवत्।





# बन्धविमुक्तिः

प्राचीनः कश्चन कालः। तदा शङ्करः नाम कश्चन प्रसिद्धः वृद्धः मान्त्रिकः आसीत्। सः जीवनार्थं ग्रामे लघुवाणिज्यं करोति स्म। 'एषः मान्त्रिकः' इति विषयं इदानीं ग्रामे कोऽपि न जानाति स्म। किन्तु किशोरः नाम एकः बालकः तं विषयं जानाति स्म।

किशोरः अनाथः। तस्य पित्रार्जितं किमपि न आसीत्। अतः सः बालकः मान्त्रिकगृहे एव निवसति। वाणिज्ये साहाय्यं करोति च।

आपणे काचित् अपूर्वा वीणा आसीत्। आपणे किशोरस्य सर्वस्वातन्त्र्यम्। किन्तु वीणां स्प्रष्टुम् अनुमतिः नास्ति। ग्राहकाः कदाचित् पृच्छन्ति स्म "तस्याः वीणायाः किं मूल्यम्?" इति। तदा मान्त्रिकः असहनया वदति- "सा वीणा विक्रयणार्थं न" इति।

केचन धनिकाः अपि मान्त्रिकस्य आपणे व्यवहरन्ति। तेषु कश्चित् वीणार्थं लक्ष-रूप्यकाणि दातुम् अपि सिद्धः अभवत्। तथापि मान्त्रिकः वीणां न विक्रीतवान्।

एकदा किशोरः पृष्टवान्- "तात! वीणायाः विक्रयणेन महान् आयः भवति। किमर्थं विक्रयणं न करोति?" इति।

"भवान् यदा प्रौढः भविष्यति तदा अहम् एतां वीणां भवते दास्यामि। एतद्वीणातः अपूर्वं सङ्गीतं निस्सरति। तत्सङ्गीतं श्रुत्वा जनाः मन्त्रमुग्धाः भविष्यन्ति" इति वदन् मान्त्रिकः वीणाम् आस्फालितवान्। तदा अपूर्वसङ्गीतस्य तरङ्गाः तत्र सर्वत्र व्याप्ताः।

वीणायाः रहस्यम् एतत् आसीत् यत् मान्त्रिकेण मन्त्रबलेन बहुवर्षेभ्यः पूर्वं वीणायां काचित् देवकन्या बन्धने स्थापिता आसीत्। सा देवकन्या मान्त्रिकस्य अधीना। यदा मान्त्रिकः आदिशति तदा सा दिव्यसङ्गीतं श्रावयति। देवकन्या मान्त्रिकतः भीता। किन्तु

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

किशोरविषये तस्याः महती प्रीतिः। किशोरः यदा कदाऽपि वीणाम् आस्फालयति चेत् देवकन्या मधुरं, किन्तु वेदनापूर्णं सङ्गीतम् उत्पादयति। तत् श्रुत्वा किशोरः आनन्दाश्रूणि मुञ्चति।

अत्रान्तरे किशोरस्य जन्मदिनम् आगतम्। तद्दिने किशोरः मान्त्रिकस्य पादयोः नमस्कारं कृतवान्। आशीर्वादेन अनुगृह्णन् मान्त्रिकः उक्तवान्- "पुत्र किशोर! वीणां भवते ददामि इति उक्तवान् आसं किल? अद्य ददामि। भवान् यथा इच्छति तथा तस्याः उपयोगं करोतु" इति। वीणां किशोराय दत्तवान् अपि।

तदा किशोरः पृष्टवान्- "तात! इतःपरं एषा मदीया एव वा? अहं यथा इच्छामि तथा उपयोगं करोमि वा?" इति।

"निश्चयेन! एषा भवदीया एव। इच्छानुसारं भवान् एताम् उपयोक्तुम् अर्हति" इति।

किशोरः वीणाम् उन्नीतवान्। मृदु आस्फालितवान् च। अपरक्षणे देवकन्या दैन्यपूर्णेन रागेण सङ्गीतम् उत्पादितवती। सा गायन्ती आसीत्- "प्रिय बालक! मां बन्धविमुक्तां करोतु। अहं स्वातन्त्र्यम् इच्छामि। वनविहारं कर्तुम् इच्छामि" इति।

तत् करुणापूर्णं सङ्गीतं श्रोतुम्



अशक्तः किशोरः वीणां भूमौ स्थापितवान्। मान्त्रिकं पश्यन् विनयपूर्णस्वरेण पृष्टवान्- "तात! अहम् एतस्याः देवकन्यायाः बन्धविमुक्तिं करोमि वा?" इति।

"वीणायां देवकन्या बद्धा अस्ति इति भवान् कथं ज्ञातवान्?" इति पृष्टवान् मान्त्रिकः।

"पितः! अहं पूर्वं बहुवारं देवकन्यायाः सङ्गीतं श्रुतवान्। तदा सर्वदा सा मां पृष्टवती - 'भवान् मां बन्धविमुक्तां करोति वा?' इति। अहं तस्याः व्याकुलतां सोढुं न शक्नोमि। यदि वीणायाः उपरि वास्तविकतया मम एव पूर्णाधिकारः तर्हि अहं तां बन्धात् विमोचयितुम् इच्छामि" इति उक्तवान्

किशोरः। तस्य वचने विनयः आसीत्, व्यथा अपि आसीत्।

"किशोर! यदि भवान् देवकन्यां बन्धात् विमोचयति तर्हि पुनः, कदापि वीणातः दिव्यसङ्गीतं न निस्सरति। यावत् सा वीणायां तिष्ठति तावदेव दिव्यसङ्गीतस्य उत्पत्तिः। एतेन दिव्यसङ्गीतेन लोकः एव भवतः चरणयोः नमस्करिष्यति। एतेन एव भवान् कीर्तिम् ऐश्वर्यम् अधिकारं च प्राप्स्यति। यदि वीणायां देवकन्या न स्यात् तर्हि भवान् दरिद्रः एव जीविष्यति। कीदृशं जीवनं प्रियं भवतः?" इति मान्त्रिकः पृष्टवान्।

किशोरः उक्तवान्- "मम जीवनं यथा वा भवतु नाम। इतोऽपि अधिककालं देवकन्यां बन्धने स्थापयितुं न इच्छामि" इति। वीणां भूमौ पातितवान् सः।

वीणा शतधा भग्ना। अपरक्षणे देवकन्या मन्दहासं प्रकटयन्ती प्रत्यक्षम् अभवत्। सा मधुरस्वरेण "किशोर! भवान् दिव्यबालकः। भवान् मां बन्धात् विमोचितवान्। अहं प्रसन्ना अस्मि। इतः परं मम अनुपस्थिति-कारणतः वीणातः अपूर्वं सङ्गीतं न निस्सरति। किन्तु अहं तदा तदा भवतः समीपम् आगत्य दिव्यं सङ्गीतं श्रावयामि। तत्सर्वं भवान् लिखतु। पुस्तकरूपेण प्रकाशयतु च। यदा ग्रन्थः प्रकाशितः भवति तदा भवान् यथेष्टं कीर्तिं धनं च सम्पादयिष्यति" इति उक्त्वा अदृश्यतां गता।

मान्त्रिकः किशोरं पश्यन् मन्दहासं प्रकटितवान्। भग्नायाः वीणायाः खण्डान् एकत्र सङ्गृह्य स्वमन्त्रबलेन योजयित्वा तां यथापूर्वं कृतवान्। तां किशोरस्य हस्ते अर्पयन् उक्तवान् च- "पुत्र! अहं भवतः त्यागभावेन तुष्टः अस्मि। एतां वीणां स्वीकरोतु। आजीवनं सुखं जीवतु। भवान् वस्तुतः एतां वीणां प्राप्तुम् अर्हः" इति। एवं वदन् एव मान्त्रिकः अपि अदृश्यतां गतः।








पार्वती विष्णुसमीपं गत्वा प्रार्थितवती- ''मम पतिं गजासुरः स्वहृदये लिङ्गरूपेण गोपितवान् अस्ति। मम पतिः कैलासं यथा प्राप्नुयात् तथा उपकरोतु भवान्'' इति।

''एतद्विषये अहम् अवश्यं प्रयत्नं करोमि'' इति आश्वासनं दत्तवान् विष्णुः। सः कैलासस्य पार्वत्याः च रक्षणार्थं गणप्रमुखान् कांश्चन नियुज्य रुद्रगणेन वीरभद्रगणेन च सह ब्रह्मणः समीपं गतवान्। इन्द्रादयः देवाः अपि विष्णुम् अनुसृतवन्तः। विष्णुः ब्रह्मणे सर्वं वृत्तान्तं निवेदितवान्।

ब्रह्मविष्णुप्रभृतयः देवाः तद्गणीयाः च छद्मवेषं धृतवन्तः। सर्वे सम्भूय शोणितपुरं गतवन्तः च। नन्दी वृषभरूपं धृतवान्। अन्ये जनाः विविधानि वाद्यानि धृत्वा तम् अनुसृतवन्तः। विष्णुः गोपालस्य रूपं धृतवान्। शिवस्तोत्रं गायन्तः ते शोणितपुरस्य मार्गेषु अटितवन्तः।

गजासुरः श्रुतवान् यत् कश्चन वृषभः मनुष्याः यथा वदन्ति तथा आचरति इति। अतः सः गोपालकानां तं गणं स्वराजधानीम् आनायितवान्। वृषभः गोपालस्य सङ्गीतस्य अनुगुणं नृत्यम् अकरोत्। गोपालाः सर्वे गीतगानव्याजेन शिवस्य स्तोत्रं कृतवन्तः। तेषां स्तोत्रेण गजासुरस्य हृदये स्थितं शिवलिङ्गं सन्तुष्टं सत् क्रमशः अवर्धत।

शिवलिङ्गस्य वर्धनेन गजासुरः श्वासोच्छ्वासे कष्टम् अनुभूतवान्। सः ज्ञातवान् यत् मरणं

८. ''गजासुरस्य मरणम्''



समीपम् आगतम् इति। अतः सः श्रद्धया प्रार्थितवान्- "परमेश्वर! मां रक्षतु" इति।

"गजासुर! भवतः मरणम् आसन्नम् अस्ति। भवान् किमपि वरं प्रष्टुम् अर्हति" इति अवदत् शिवलिङ्गम्।

"परमेश्वर! मम शिरः वन्दनीयं भवतु। मम चर्म भवतः धारणयोग्यं भवतु। तथैव पुनर्जन्मतः मम मुक्तिः भवतु" इति गजासुरः विनयेन प्रार्थितवान्।

"तथास्तु" इति उक्त्वा शिवः गजासुरस्य हृदयम् उद्भिद्य बहिः आगतवान्। तं स्वसमीपे मूषकरूपेण स्थापितवान्। गजासुरस्य मरणं यदा ज्ञातं तदा क्रुद्धाः तदनुचराः आयुधानि गृहीत्वा युद्धार्थम् आगतवन्तः। किन्तु विष्णुः तान् सर्वान् असुरान् मारितवान्।

अनन्तरं ब्रह्मा विष्णुः इन्द्रः नन्दीश्वरः इत्यादयः सर्वे रुद्रगणेन सह कैलासं प्रति प्रस्थिताः। 'गजासुरस्य संहारं कृत्वा अहम् आगच्छन् अस्मि' इति वार्ता शिवः पार्वतीं प्रति प्रेषितवान्।

पार्वती तु दूतद्वारा इतःपूर्वम् एव एतां वार्ता प्राप्तवती आसीत्। "अस्मिन् शुभ-सन्दर्भे अहं सतैलस्नानं कृत्वा गृहदेवताः पूजयित्वा सिद्धा भवामि" इति चिन्तितवती पार्वती। अतः सा रक्षकगणानाम् अधिपतीन् उक्तवती- "पुत्राः! अहं अभ्यञ्जन-स्नानार्थं अन्तः गच्छन्ती अस्मि। अस्मिन् सन्दर्भे यः कोऽपि आगच्छतु नाम, तस्मै प्रवेशावकाशः न दातव्यः" इति।

पार्वत्या नियुक्ताः लक्ष्मीगणस्य अधिपतयः द्वारस्य रक्षणार्थं स्थितवन्तः। तदा तत्र नन्दीश्वरादयः आगत्य अन्तः गन्तुम् अवकाशं प्रार्थितवन्तः। तेषां गमनं निवारयन्तः गणाधि-पतयः उक्तवन्तः- "पार्वतीमाता अभ्यञ्जन-स्थानार्थम् अन्तः गतवती अस्ति। तस्याः अनुमतिं विना अन्तः प्रवेशः न शक्यः एव" इति।

"वयं तु ईश्वरस्य आदेशनुसारम् अत्र आगतवन्तः। त्रिषु लोकेषु कोऽपि ईश्वरस्य आज्ञां तृणीकर्तुं न अर्हति। एवं स्थिते



ते विनायासं रुद्रगणं पराजितवन्तः।

पराजिताः रुद्रगणीयाः शिवसमीपम् आगतवन्तः, प्रवृत्तं समग्रं निवेदितवन्तः च। तत्सन्दर्भे तत्र नारदमुनिः अपि आसीत्। नारदः पृष्टवान्- "महादेव! पार्वत्याः द्वार-पालकानां तावान् दर्पः वा यत् ते भवतः आज्ञाम् अपि तिरस्कुर्वन्ति?" इति।

शिवः तु स्वगणीयानां पराजयेन क्रुद्धः आसीत् एव। इदानीं नारदस्य वचनं अग्नौ स्थापितं घृतम् इव अभवत्। कोपवशः सः सर्वेषां लक्ष्मीगणीयानां शिरच्छेदार्थं त्रिशूलम् आदिष्टवान्। त्रिशूलं तथैव अकरोत्।

पार्वत्याः भवनस्य द्वारे इदानीं प्रवेशं निवारयितुं कोऽपि नास्ति। विष्णु-ब्रह्म-शिवादयः अन्ये देवाः च स्वगणेन सह पार्वत्याः भवनं प्राप्तवन्तः। तत्र पार्वती चिन्तया दुःखेन च व्याकुला उपविष्टा आसीत्। पूर्वं अभ्यञ्जने देवपूजने च तस्याः यः उत्साहः आसीत्, स च उत्साहः सर्वथा नष्टः इदानीम्। आगतानां स्वागतार्थम् अपि सा न उत्थितवती।

पत्न्याः दुःखं दृष्ट्वा शिवः अपि खिन्नः। सः तां सान्त्वयितुम् इच्छन् तस्याः समीपम् आगतवान्। किन्तु पार्वती तं कटाक्षेण अपि न दृष्टवती एव।

परिस्थितेः विषमतां ज्ञात्वा विष्णुः पार्वत्याः

भवनस्य अन्तः गच्छतः अस्मान् अवरोधयन्तः भवन्तः के?" इति दर्पेण पृच्छन्तः रुद्रगणीयाः द्वाररक्षणे नियुक्तैः लक्ष्मीगणीयैः सह युद्धम् आरब्धवन्तः। तत्परिणामतः तत्र कोलाहलः उत्पन्नः।

कोलाहलं श्रुत्वा पार्वत्याः परिचारिका काचित् बहिः आगतवती। तत्र प्रचलत् घोरं युद्धं दृष्ट्वा सा धावन्ती अन्तः गत्वा पार्वत्यै सर्वं निवेदितवती "देवि! रुद्र-गणीयाः द्वाररक्षकगणेन सह युद्धं कुर्वन्तः सन्ति। किं करणीयम् इदानीम्?" इति।

रुद्रगणीयानां व्यवहारेण पार्वती अतीव क्रुद्धा। लक्ष्मीगणीयानां साहाय्यार्थं सा देवगणं प्रेषितवती। देवगणस्य बलं प्रवृद्धम्।



समीपम् आगतवान्। उक्तवान् च- "भगिनि! गजासुरस्य मरणवार्तां श्रुत्वा समग्रः प्रपञ्चः उत्सवम् आचरति। एवं स्थिते भवती किमर्थं दुःखतप्ता? दुःखस्य कारणं वदतु। तन्निवारणे अहम् अपि प्रयत्नं करोमि" इति।

पार्वती विष्णुम् उक्तवती- "सहोदर! ईश्वरः निष्कारणं मम पुत्रतुल्यानां लक्ष्मीगणीयानां संहारं कृतवान्। ते यदि जीविताः भवेयुः, उचितम् अधिकारं च प्राप्नुयुः, तर्हि अहं सन्तुष्टा भवेयम्" इति।

'भवतः शिरः सदा वन्दनीयं भविष्यति' इति गजासुराय यः वरः दत्तः आसीत् तं स्मृतवान् शिवः। अतः सः स्वगणीयान् आज्ञापितवान् यत् लक्ष्मीगणीयानां प्रमुखस्य शरीरम् अत्र आनयन्तु इति। गजासुरस्य शिरः आनेतुं रुद्रगणीयान् प्रेषितवान्। यदा गजासुरस्य शिरः लक्ष्मीगणप्रमुखस्य कबन्धः च आगतः तदा तत् द्वयं सः योजितवान्। गणाधिपतिः निद्रातः इव उत्थाय स्थितवान्। एवमेव मृतानाम् अन्यलक्ष्मीगणीयानाम् कबन्धस्य उपरि अपि गजशिरांसि स्थापितानि। तेन ते सर्वे उज्जीविताः अभवन्।

सर्वत्र हर्षस्य वातावरणं प्रसृतम्। अस्मिन् सन्तोषसन्दर्भे विश्वदर्शी नाम उपब्रह्मा उत्थाय पार्वतीपरमेश्वरौ उक्तवान्- "अहं मम पुत्रीं जयलक्ष्मीं गणाधिपतये दातुम् इच्छामि। अन्याः पुत्र्यः अन्यगणसदस्येभ्यः दास्यामि। सर्वैः अनुमन्तव्यम्" इति।

विश्वदर्शिनः प्रस्तावं सर्वे ससन्तोषम् अङ्गीकृतवन्तः। गजासुरस्य मारणेन लक्ष्मीगणीयानां पुनरुज्जीवनेन लक्ष्मीगणीयानां विवाहप्रस्तावेन च असीमः आनन्दः तत्र उत्पन्नः। ब्रह्मा पौरोहित्यम् अङ्गीकृतवान्। अग्निसाक्षिकं गणाधिपतिः विश्वदर्शिनः पुत्रीं जयलक्ष्मीं परिणीतवान्। अन्ये विश्वदर्शिनः अन्याः पुत्रीः परिणीतवन्तः।

विवाहकार्ये यदा समाप्ते तदा पार्वती स्वपतिं परमेश्वरम् उक्तवती- "आर्य! मम पुत्रान् केषुचित् उद्योगेषु नियोजयतु" इति।

शिवः पार्वत्याः प्रस्तावविषयं चिन्तयन्

आसीत्। अत्रान्तरे तत्र षण्मुखः आगतवान्। शिवः षण्मुखम् उक्तवान्- "षण्मुख ! अहं गणाधिपतये अस्मद्गणस्य आधिपत्यं दातुं निश्चितवान्" इति। तदा षण्मुखः- "ममैव गणाधिपत्यम् अपेक्षितम्" इति आग्रहपूर्वकम् उक्तवान्।

"कुमार ! इदानीं तु भवान् देवसेनापतिः अस्ति एव। अतः रुद्रगणस्य आधिपत्यं गणाधिपतये ददामि। तेन उभयोः अपि समानं स्थानं दत्तं भविष्यति" इति।

किन्तु षण्मुखः कस्यापि वचनं न अङ्गीकृतवान्। सम्पूर्णं गणाधिपत्यं मम एव आवश्यकम् इति सः आग्रहं कृतवान्।

अनन्योपायः शिवः गणाधिपतेः षण्मुखस्य च मध्ये काञ्चित् स्पर्धाम् आयोजितवान्। स्पर्धायाः नियमः एवम् आसीत् यत् उभाभ्याम् अपि वाहनसाहाय्येन पुण्यक्षेत्राणां दर्शनं करणीयम्। तीर्थक्षेत्रेषु स्नात्वा आगन्तव्यम्। यः प्रथमम् आगच्छति सः सर्वेषां गणानाम् अधिपतिः भविष्यति' इति। षण्मुखः गणाधिपतिः च एतत् अङ्गीकृतवन्तौ।

शिवः षण्मुखाय मयूरवाहनं दत्तवान्। लक्ष्मीगणपतये तु स्वसमीपे मूषकरूपेण स्थितं गजासुरं दत्तवान्। षण्मुखः तत्क्षणे एव मयूरम् आरुह्य आकाशमार्गम् अनुसृतवान्।

लक्ष्मीगणपतिः तु पार्वत्याः समीपं गत्वा उक्तवान्- "पश्यतु मातः ! कीदृशम् अन्याय्यम् एतत् ! षण्मुखः शक्तिशाली। परमेश्वरः तस्मै समर्थं मयूरवाहनं दत्तवान्। अहं तु वामनः। गजमुखः स्थूलोदरः च। एतादृशशरीरी अहं मूषकस्य उपरि उपविश्य कथं वा प्रवासं कुर्याम् ? एषा स्पर्धा एव वञ्चनापूर्णा। एतदपेक्षया 'भवते गणाधिपत्यं न दीयते' इति परमेश्वरः यदि अवदिष्यत् तर्हि तदेव समीचीनम् अभविष्यत्" इति।

"वत्स ! भवान् विष्णोः समीपं गत्वा समग्रं निवेदयतु। सः एव कमपि उपायं सूचयेत्" इति पार्वती गणपतिं सूचितवती।





# महनशक्तिः

कस्मिंश्चित् काले श्वेतनगरे शीतकाले प्रवृत्तः विषयः एषः। तस्मिन् वर्षे तत्र शैत्यं कालपुरुषवत् अत्यन्ततीक्ष्णं क्रूरं च आसीत्। पूर्वं कदापि अननुभूतं तत् शैत्यं सायङ्कालानन्तरम् अधिकाधिकम् अभिवर्धते स्म। सर्वे जनाः द्वाराणि वातायनानि च पिधाय तेषां मध्ये वर्तमानेषु रन्ध्रेषु अपि वस्त्रखण्डानि निक्षिप्य अन्तः एव तिष्ठन्ति स्म।

तादृशदिनेषु कदाचित् जितेन्द्रनामकस्य कस्यचित् धनिकस्य गृहे काचित् समस्या सञ्जाता। जितेन्द्रस्य पिता भोगेन्द्रः अत्यधिकशैत्येन कम्पते स्म। तस्य वयः षष्टिवर्षेभ्यः अधिकम् आसीत्। जितेन्द्रः ऊर्णकम्बलैः पितुः शरीरम् आच्छादितवान्। अग्निं प्रज्वाल्य तस्य समीपे निक्षिप्तवान्। तथापि भोगेन्द्रः शैत्यं सोढुम् असमर्थः आसीत्। हूँ हूँकारं कुर्वतः तस्य स्वरः अपि कम्पते स्म।

"एतत् असामान्यं शैत्यं भोः! ज्वरसम्बन्धिशैत्यम्! वैद्यम् आनयतु। औषधं विना एतत् न्यूनं न भवति। प्रातःकालपर्यन्तम् एवमेव तूष्णीं स्थीयते चेत् न जानामि- का वा गतिः स्यात्। मम तु महती भीतिः" इति उक्तवती जितेन्द्रस्य माता।

"एतस्यां रात्रौ एतादृशशैत्ये वैद्यस्य गृहं कः गच्छेत्? यथाकथञ्चित् गच्छति चेत् अपि एतस्मिन् शैत्ये वैद्यः अस्माकं गृहम् आगच्छति वा?" इति जितेन्द्रः संशयं प्रकटितवान्।

"एतस्मिन् शैत्ये वैद्यः न आगच्छेत्। किन्तु यदि वयं रोगस्य लक्षणानि लिखित्वा प्रेषयामः तर्हि यत्किञ्चित् औषधं प्रेषयेत्" इति जितेन्द्रस्य माता सूचितवती।

किन्तु गृहस्य द्वारम् उद्घाट्य बहिः गन्तुं न कोऽपि सिद्धः आसीत्। गृहे द्वौ सेवकौ आस्ताम्। किन्तु 'आवाभ्यां चलितुम् अपि



सर्वथा न शक्यते' इति वदन्तौ तौ बहिः गन्तुं निराकृतवन्तौ।

अन्ते जितेन्द्रस्य रक्तं नेत्रद्वयं दृष्ट्वा एकः सेवकः भीत्या यथाकथञ्चित् मनः दृढं कृत्वा बहिः गन्तुं गृहस्य द्वारम् उद्धाटितवान्।

द्वारस्य उद्धाटनसमनन्तरम् एव ''अम्ब! किञ्चित् अन्नं ददातु मातः!'' इति शब्दं श्रुतवान् सः। तस्य पुरतः एकः याचकः स्थितः आसीत्।

कटिप्रदेशे वेष्टितम् एकं वस्त्रखण्डं विना अन्यत् किमपि भिक्षुकस्य शरीरे न आसीत्। आच्छादकम् अपि किमपि नास्ति। हस्ते एकं मृत्पात्रम् आसीत्। तादृशशैत्ये अपि भिक्षुकस्य शरीरे किञ्चित् अपि कम्पनं न आसीत्।

तं दृष्ट्वा सेवकः शीघ्रं शीघ्रम् अन्तः गत्वा जितेन्द्रम्- ''आर्य! इदानीम् अस्माकं वैद्यस्य आवश्यकता एव नास्ति। एकः महान् योगी अस्माकं गृहस्य द्वारसमीपे उपस्थितः अस्ति। तस्य माहात्म्यं अस्ति यत् एतादृशे तीक्ष्णशैत्ये अपि सः वस्त्रहीनः सन् अपि न कम्पते! ईश्वरः एव तं प्रेषितवान् स्यात्। पश्यतु स्वामिन्!'' इति उक्तवान्।

एताम् अद्भुतवार्तां श्रुत्वा जितेन्द्रः सम्भ्रमेण द्वारस्य समीपं गत्वा दृष्टवान्। याचकः रिक्तहस्तं जितेन्द्रं दृष्ट्वा अत्यन्त-दीनस्वरेण- ''आर्य! बुभुक्षया अहं पीडितः अस्मि भोः। कृपया किञ्चित् अन्नं दापयतु। मम प्राणान् रक्षतु'' इति उक्तवान्।

जितेन्द्रः तं परीक्षादृष्ट्या पश्यन् ''पश्यतु भोः, मम पिता असह्यशैत्येन ज्वरेण च पीडितः अस्ति। तस्य कष्टं भवान् परिहरति चेत् अहं भवते उदरपूर्णं भोजनं दास्यामि'' इति उक्तवान्।

तदा याचकः दीनस्वरेण ''आर्य! बुभुक्षया मरणोन्मुखस्य मम पुरतः एतादृशनियमान् कृपया न वदतु। अहं वैद्यविद्यां न जानामि। अनामधेयः कश्चित् साधारणभिक्षुकः अस्मि अहम्'' इति उक्तवान्।

जितेन्द्रः क्षणद्वयं पर्यालोच्य- ''अस्तु तावत्, अस्माकं पार्श्ववीथ्यां वैद्यः अस्ति। तस्य गृहं



गत्वा औषधम् आनीय ददाति वा?" इति याचकं पृष्टवान्।

"इदानीम् एव उक्तं खलु- मम शरीरे किञ्चित् अपि शक्तिः नास्ति इति। ग्रासद्वयं खादामि चेत् किञ्चित् चलितुं शक्नोमि" इति वदन् याचकः तत्रैव अधः उपविष्टवान्।

"नटनं मास्तु। किञ्चित् आलोचयतु। प्रथमम् औषधम् आनयति चेत् अन्नं अनन्तरम् दास्यामि। अन्यथा मृत्पिण्डम् अपि न दास्यामि" इति उक्तवान् जितेन्द्रः।

'प्रथमम् अन्नं दीयते चेत् तत् भक्षयित्वा सः तथैव निर्गच्छेत्' इति जितेन्द्रस्य संशयः।

गत्यन्तराभावात् वैद्यस्य गृहं गन्तुं याचकः अङ्गीकृतवान्। तदा जितेन्द्रः पितुः रोग-लक्षणानि एकस्मिन् पत्रे विलिख्य याचकस्य हस्ते दत्त्वा "एतत् वैद्यस्य हस्ते दत्त्वा तस्य प्रत्युत्तरपत्रम् आनयतु" इति उक्त्वा वैद्यगृहं गन्तुं मार्गं निर्दिष्टवान्।

दुर्बलः अपि याचकः यथाकथञ्चित् बलम् अवलम्ब्य ततः गतवान्। जितेन्द्रः अन्तः गत्वा प्रवृत्तं वृत्तान्तं गृहजनान् कथितवान्। ते सर्वे शैत्यस्य विषये याचकस्य शक्तिं श्रुत्वा आश्चर्यचकिताः अभवन्।

"केचन भिक्षुकाः शैत्यस्य बाधानिवारकानि मूलानि जानन्ति इति श्रूयते। तादृशमूलं मुखे निक्षिप्य तत् जग्ध्वा अत्यन्ततीक्ष्णं शैत्यम् अपि सोढुं ते शक्नुवन्ति। एषः भिक्षुकः यदा प्रत्यागच्छति तदा तस्य मूलस्य नाम ज्ञातव्यम्। तादृशं मूलम् आनीय गृहे स्थापनीयम्" इति उक्तवती जितेन्द्रस्य माता।

"तादृशं मूलम् अस्ति वा न वा इति तु अन्यः विषयः। किन्तु एतादृशः एकः कर्मकरः गृहे भवति चेत् महत् प्रयोजनं भवति। एतस्मै अधिकं वेतनम् अपि दातव्यम् नास्ति। द्विवारं भोजनं दद्मः चेत् सम्यक् कार्यं करोति" इति उक्तवान् जितेन्द्रः।

किञ्चित्कालानन्तरं याचकः प्रत्यागतवान्। वैद्यः औषधं दत्त्वा तस्य उपयोगक्रमम्

विलिख्य प्रेषितवान् आसीत्। औषधसेवनेन अल्पे एव काले भोगेन्द्रस्य ज्वरनिवारणम् अभवत्। सः सुखनिद्रामग्नः जातः।

एतेन सन्तुष्टा जितेन्द्रस्य पत्नी याचकं 'अस्यां रात्रौ अत्रैव तिष्ठतु' इति आदिश्य यथेच्छम् अन्नं परिवेषितवती। तस्य भोजनानन्तरं "किं भोः, भवान् क्षीरं दोग्धुं जानाति वा?" इति पृष्टवती। "जानामि मातः!" इति उक्तवान् याचकः।

जितेन्द्रस्य गृहे गोद्वयम् आसीत्, तथा महिषीद्वयम् अपि। तीक्ष्णशैत्यं निमित्तीकृत्य सेवकाः क्षीरं दोग्धुं गोष्ठं गन्तुम् अपि निराकुर्वन्ति स्म। तदा तु गोदोहनवेला आसीत्। अतः ताः कोलाहलं कुर्वन्ति स्म।

जितेन्द्रस्य पत्नी याचकस्य हस्ते कलशान् दत्त्वा "एवं तर्हि गोष्ठं गच्छतु। तत्र गोमहिषीणां क्षीरं दुग्ध्वा आनयतु" इति उक्त्वा दीपम् आनीय दत्तवती।

याचकः सद्यः एव कलशान् गृहीत्वा गोष्ठं गतवान्। तत्र दीपं एकत्र स्थापयित्वा क्षीरं दुग्ध्वा आनीतवान्। एतत् दृष्ट्वा जितेन्द्रस्य पत्नी बहु सन्तुष्टा अभवत्।

अनन्तरं सा याचकस्य शयनार्थम् एकं कटं दत्तवती। एकत्र कोणे कटं प्रसारयन् याचकः पृष्टवान्- "आच्छादयितुं किमपि ददातु मातः!" इति।

"तत्र पश्यतु। बहिः अङ्गणे दण्डस्य उपरि एकः कम्बलः अस्ति। स्वीकरोतु"



इति उक्तवती जितेन्द्रस्य माता ।

भिक्षुकः बहिः अङ्गणं गन्तुं प्रवृत्तः । तदा अकस्मात् तीव्रवेगेन आगतेन शीतवायुना पीडितः सः झटिति अन्तः प्रत्यागतवान् । सम्भ्रान्तः सः शरीरं सङ्कुचितं कृत्वा "अम्ब, बहु शैत्यम् ! अन्तः अन्यः कम्बलः नास्ति वा ?" इति कम्पमानेन स्वरेण पृष्ठवान् ।

याचकस्य वचनं श्रुत्वा तत्र स्थिताः सर्वे आश्चर्येण चकिताः अभवन् । जितेन्द्रः तं दृष्ट्वा "किं भवन्तम् अपि शैत्यं बाधते वा ?" इति पृष्टवान् ।

"किमर्थम् एवं पृच्छति स्वामिन् ! मनुष्यमात्रस्य शीतबाधा अस्ति एव खलु ?" इति उक्तवान् याचकः ।

"एवं तर्हि यदा भवान् वैद्यस्य गृहं गतवान्, तदा शैत्यं न आसीत् वा ?" इति पृष्टवान् जितेन्द्रः ।

"तत् तु किमपि न जानामि भोः । दिनद्वयात् मम उदरं रिक्तम् आसीत् । कुत्रापि किञ्चित् अपि न लब्धम् । बुभुक्षाक्लेशं विना अन्यः कोऽपि विचारः मनसि न आसीत् । तदा शैत्यं वा वायुं व किमपि न जानामि स्म । प्रप्रथमं बुभुक्षानिवारणम् । तदर्थं गृहात् गृहं अटित्वा याचनीयम् । शैत्यं शैत्यं इति एकत्र उपविशामि चेत् उदरनिर्वाहः कथं भवेत् ?" इति यदा याचकः पृष्टवान् तदा जितेन्द्रः पुनः- "एवं तर्हि बुभुक्षाशमनानन्तरं गोष्ठं गत्वा क्षीरं दुग्धवान् खलु ? तत् कथं



कृतम् ?" इति पृष्टवान् ।

"तत्र आश्चर्यस्य कारणं किं वा अस्ति स्वामिन् ! अत्रैव तिष्ठतु इति उक्त्वा माता मह्यम् उदरपूर्णं भोजनं दत्तवती। तदा सा माता यत् किमपि वा वदतु तत् अवश्यं करणीयम् इति उत्साहः जातः। क्षीरदोहन-कार्येण मातुः सन्तोषः भवति इति उत्साहेन व्याप्ते मनसि शैत्यस्य विचारः एव न आगतः" इति उक्तवान् याचकः।

इदानीं जितेन्द्रः एकं विषयं ज्ञातवान् यत् प्रथमं बुभुक्षानिवारणं याचकस्य अपेक्षतः विषयः आसीत्। तस्मिन् विचारे मग्नेन तेन शीतबाधा न लक्षिता। बुभुक्षाशमनानन्तरं कृतज्ञताभावेन पूर्णे मनसि शीतबाधां चिन्तयितुम् अवकाशः न आसीत्। द्वयोः अपि पूरणानन्तरं शैत्यस्य पीडा उत्पन्ना। कम्बलः अपेक्षितः अभवत्। मनः शरीरपीडां ज्ञातुं शक्तम् अभवत्। एतेन याचकः सज्जनः कृतज्ञः च इति ज्ञातुं शक्यते।

जितेन्द्रस्य अन्यः अपि सन्देहः अवशिष्टः आसीत् 'मनसि कृतज्ञताभावः अस्तु नाम, किन्तु अत्यन्ततीक्ष्णं शैत्यं सोढुं शरीरं कथं शक्नोति ?' इति। अतः सः पृष्टवान् "ननु भोः, एतस्मिन् शैत्ये रक्तपरिचलनम् एव स्थगितं भवति। तादृशं भयङ्करं शैत्यं भवान् कथं सोढवान् ?" इति।

तदा याचकः मन्दं हसन् "स्वामिन्, तत्र विशेषः कोऽपि नास्ति। भाग्यवतां शरीरधर्मः भिन्नः भवति। मादृशदरिद्राणां तु शरीरप्रकृतिः अन्या। मम तु एतत् शैत्यं तावत् असह्यं नास्ति एव। यदा आवश्यकता भवति, तदा शैत्यादिबाधां सोढुं मनसि शक्तिः उत्पद्यते" इति उक्तवान्।

जितेन्द्रस्य सन्देहः परिहृतः। तदारभ्य सः अन्ये च शैत्यं प्रति भीतिं त्यक्तवन्तः। सेवकाः अपि जडतां विहाय सर्वकार्याणि कर्तुम् आरब्धवन्तः। ततः परं याचकः अपि जितेन्द्रस्य सेवकेषु अन्यतमः अभवत्।



# गृध्राः

दूरदर्शकेन वयं यथा दूरस्थानि वस्तूनि अपि स्पष्टं पश्यामः तथैव गृध्रः अपि आकाशे सञ्चरन् एव भूमौ स्थितानि सूक्ष्माणि अपि वस्तूनि स्पष्टं पश्यति।

गृध्राणां नेत्राणि दूरदर्शकानि इव आचरन्ति। एतादृशं वैशिष्ट्यं मानवस्य अन्यपक्षिणः वा नास्ति एव।

समीपस्थान् द्रष्टुं गृध्रस्य नेत्रस्य कश्चन भागः उपकरोति। अपरः भागः दूरस्थान द्रष्टुं साहाय्यं करोति। एतेन गृध्रस्य आहारान्वेषणम् अतीव सुलभम्।

मांसाहारिणः एते गृध्राः आकारेण महान्तः। एकमीटर्दीर्घाः अपि भवन्ति कदाचित्। समर्थेन पक्षेण आकाशे निरायासं सञ्चरन्ति एते। सुदृढयोः पादयोः अन्ते अङ्गुलित्रयम् अग्रे,एका अङ्गुलिः पृष्ठतः च प्रसृताः तिष्ठन्ति। चञ्चुः दीर्घा, अग्रभागे वक्रा च। एतेन सुदृढं चर्म अपि एतैः विनायासं विदारयितुं शक्यते।

यद्यपि गृध्राः मांसाहारिणः, तथापि एते जीवतः प्राणिनः पक्षिणः न मारयन्ति। मृतानां मांसः एतेषां आहारः।

एषिया-आफ्रिका खण्डयोः ऐरोप्यखण्डस्य उष्णप्रान्ते च एते अधिकं दृश्यन्ते। मृतं जीविनं दूरतः एव ज्ञात्वा समूहरूपेण आगत्य तस्य जीविनः मांसं सन्तोषेण खादन्ति। आहारः न लब्धः चेत् उपवासार्थम् अपि सिद्धा एव एते। यदा आहारः लभ्यते, तदा आवश्यकतायाः अपेक्षया अधिकम् एव खादन्ति। मृतानां मांसम् एते खादन्तीत्यतः वातावरण-शुद्धौ एतेषां महत्त्वपूर्णं पात्रम्।

गृध्रेषु विविधाः जातयः सन्ति। भारते तु कृष्णवर्णीयाः गृध्राः एव दृश्यन्ते।





# कठिनशब्दानां सान्दर्भिकाः अर्थाः।

| | |
|---|---|
| Courtyard | अङ्गणम् - |
| Attic | अट्टः |
| End | अन्तः - |
| Projection of oneself to be first | अहमहमिका - |
| Struck | आस्फालितवान् - |
| Having broken | उद्भिद्य - |
| Abatement | उपशमनम् - |
| Coarse rug | ऊर्णकम्बलः - |
| Headless body (Torso) | कबन्धः - |
| Saffron coloured cloth | काषायवस्त्रम् - |
| Corner | कोणः - |
| Barber | क्षौरिकः - |
| Dead | गतप्राणः - |
| Eagle | गृध्रः - |
| Lizard | गोधिका - |
| Cattle-shed | गोष्ठः - |
| Knot | ग्रन्थिः - |
| Morsel | ग्रासः - |
| Beak | चञ्चूः - |
| Having chewed | जग्ध्वा - |
| Double drum | ढक्का - |
| Telescope | दूरदर्शकम् - |
| Milking | दोहनम् - |
| Winnowing | निष्पवनम् - |
| Feather | पक्षः - |
| Trench | परिखा - |
| Turned aside | परिवलितम् - |
| Hidden | प्रच्छन्नः - |
| Replica | प्रतिरूपम् - |
| Rumour | प्रथा - |
| Precipice | प्रपातः - |
| Head | मस्तकम् - |
| Limit | मितिः - |
| Tonsure | मुण्डनम् - |
| Rice cooked with green-gram dhall | मुद्गान्नम् - |
| Mud pot | मृत्पिण्डम् - |
| Ball of clay | मृत्पात्रम् - |
| Rope | रज्जुः - |
| Blacksmith | लोहकारः - |
| Bangle | वलयः - |
| Disguise | वेषः - |
| Loosens | शिथिलीकरोति - |
| Winnowing-fan | शूर्पः - |
| Joint | सन्धिः - |

• • • • •

## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां जनवरी-८५ मासे प्रकटयिष्यामः।**





❀ उपरितनं चित्रद्वयं पश्यन्तु। युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा नवम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ❀ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः।
❀ अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**
**७३/२, 'अक्षरम्' रङ्गराव्मार्गः, शङ्करपुरं, बेङ्गलूरु–५६०००४**

**'सप्टम्बर' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

**प्रथमचित्रम्– आशाज्योतिः एतस्याः।**
**द्वितीयचित्रम्– ज्योतिषि आशा तस्याः।**

**प्रेषिका :** बि. रमामणीदेवी, किरापल्ली, बेल्लगुण्ठ, गञ्जाम, ओरिस्सा-७६१,११९

# भवन्तः जानन्ति वा? (उत्तराणि)

**१. प. बङ्गाल गेजेट् (१७८०) २. आकान्। ३. आडम्स् शिखरम्। ४. कुशीनगरम्। ५. पतञ्जलिः।**

Printed by B.V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, 188, N.S.K. Salai, Madras-600 026. (India). Controlling Editor: NAGI REDDI.

# भवती गृहं गमिष्यति ?

| | |
|---|---|
| शारदा- मालति ! किं नूतनशाटिकां धृतवती ? कः विशेषः ? | You are in a new saree, anything special? |
| मालती- मम अग्रजः दीपावलीनिमित्तं दिल्लीतः प्रेषितवान् । | My elder brother sent it from Delhi for Deepavali. |
| शा- अतः एव मुखे तावान् सन्तोषः ! शाटिका सुन्दरम् अस्ति । युज्यते भवत्याः । किं मूल्यम् ? | So, that is why you are very happy The saree is nice and suits you well. What is the price? |
| मा- अहं किं जानामि ? अग्रजः स्वपत्रे मूल्य-विषये किमपि न लिखितवान् । | I don't know. He didn't write anything about the price. |
| शा- सः दीपावलीनिमित्तं गृहं न आगमिष्यति ? | Will he come home for Deepavali? |
| मा- एकसप्ताहतः पूर्वम् एव आगमिष्यति । | He will reach a week earlier. |
| शा- एवं तर्हि तत्सन्दर्भे भवती अपि गृहं गमिष्यति । | You will also go home by that time? |
| मा- पूर्वं तथा चिन्तितवती आसम् । यतः बहोः कालतः मातापितरौ न दृष्टौ । किन्तु इदानीं गृहगमनं व्याक्षिप्तम् । | I had thought of going as it is a long time since I saw parents, but I have now given up the idea. |
| शा- किमर्थम् ? किं संवृत्तम् ? | Why? What is the matter? |
| मा- किमपि न संवृत्तम् । अग्रजः गृहे दिन-द्वयं स्थित्वा अत्र आगमिष्यति । इतः मैसूरु गत्वा, ततः एव देहलीं गमिष्यति । | Nothing, my brother will be here after about two days' stay at home. From here he will go to Mysore and from there to Delhi. |
| शा- भवती अपि तेन सह गमिष्यति । | You will also go with him? |
| मा- आम् । इदानीं तथा योजना कृता अस्ति । भवती गृहं गमिष्यति वा ? | Yes, I have decided to. Will you go home? |
| शा- न भोः, यतः मम दिनद्वयं केवलं विरामः । | No, I will not. I have just two days of holidays. |

# मुड़-मुड़ के देखे संसार
# सुपर रिन की चमकार!




**सुपर रिन की चमकार ज़्यादा सफ़ेद**

किसी भी अन्य डिटर्जेंट टिकिया या बार से ज़्यादा सफ़ेद

हिन्दुस्तान लीवर का एक उत्कृष्ट उत्पादन

# प्राचीन-भारतस्य भव्यता तथा तेजस्विता




**चन्दमामायाः** लोकप्रियतायाः एकमात्रं प्रमाणं यत् प्रतिमासम् एतां १,२०,००,००० बालकाः पठन्ति ।

# चन्दमामायां

**चन्दमामायाः** प्रसारसंङ्ख्या सामान्यतः ८,००,००० अस्ति या प्रतिमासं भारतस्य तथा पूर्वएशियादेशानां कुटुम्बान्, पाठशालाः तथा पुस्तकालयान् च प्राप्नोति ।

प्रत्येकमासस्य कथासु दर्शितम् अस्ति ।

भारतस्य सर्वाधिक प्रसारयुता बालानां मासिकी ।